C·NO - 3026
2779



डॉ. जी. मल्लापाडा एवं ... वेरोसाव ... की अपना, १५-७-७८

श्री १००८ जगद्गुरवः पंचाचार्याः प्रसीदंतु

# दुर्वाददूरीकरणम् ।

पं० श्रीकाशीनाथ शास्त्रिणा काव्यतीर्थेन

संकलितम् ।

Q23:223
15E8

1918.

मूल्यमाणकचतुष्टयम् ] [ Price Annas 4.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

# दुर्वाददूरीकरणम् ।

श्रीक्षेत्र भूकैलास वाराणसी पुरमध्यप्रविराजमान
श्रीमज्जगद्गुरु विश्वाराध्यमहासंस्थानसंस्थेन
नागनूरु बृहन्मठाध्यक्षश्रीकाशीनाथशास्त्रिणा
काव्यतीर्थेन संकलितम् ।

Published by

**Pandit Kashinath Shastri Kavyateerth**

Jangambari, Benares City.

Printed by B. L. Pawagi

at the Hitchintak Press, Ramghat,

Benares City.

1918.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# विज्ञप्तिः ।

भो वाचकमहाशयाः

पंडित कालिकेश्वरदत्तशर्ममहोदयाः स्वग्रथितशैवब्राह्मणोत्पत्तिनामकग्रन्थस्य प्रस्तावनावसरे लिंगधारिणः शैवाअवैदिका इति प्रत्यपादयन्, एतस्मिन् विषये तेषां ममच वादो बहुदिनपर्यंतं जातः। अंते तन्महाशयैर्मौनमेवांगीकृतम्, कियत्योऽपि पत्रिकाः प्रेषिता अपि प्रत्युत्तरं नददुः । अनेन ज्ञायते, एभिः पंडितमहाशयैर्विषयोऽयमविचार्यैव प्रतिपादित इति, अतो विश्वविबुधमणयः संजातवादममुं विचार्य यथार्थतत्त्वं गृह्णंत्विति हेतुना मुद्रयित्वा प्रकाश्यते ।

विद्वज्जनविधेयः-

श्रीकाशीनाथशर्मा काव्यतीर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीगुरुभ्यो नमः ।

# " शैवब्राह्मणोत्पत्तिप्रबंधस्थप्रस्तावना "

( हिंदीभाषायाम् )

# भूमिका ।

यह शैवजातीय ब्राह्मणों की उत्पत्ति डुमराँव राजकीय प्राचीन "सरस्वतीभवन" के हस्तलिखित पुस्तकों से तथा काशी आदि पुस्तकालयों से उद्धृत कर संग्रह किया गया है । इस पुस्तक में शाखा, गोत्र, सूत्र आदिकाभी प्रकार संक्षेपरूप मे वर्णित है, जोकि सर्व्वोपयोगी है । यह शैवजातीय ब्राह्मण तैलंग, महाराष्ट्र, तामिल, कर्णाट, आदि देशों में भी वैदिक, एवं वेदवाह्य, दो भेद से विख्यात है, वैदिक शिवभक्ति वेदमार्ग द्वारा करते हैं । वेदवाह्यलिंग, शूल आदि दगाते (अंकित) हैं, और शिवार्च्चन, शिवसहस्रनामपाठ आदि शैवकर्म विशेष करते हैं और शिवार्पित ( शिवका भोगलगाया ) वस्त्र भूषण आदि के अधिकारी

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

आपने को समझते हैं अतः बहुत मनुष्य पूजा पाठ उक्त शैवब्राह्मणों ही द्वारा कराते हैं । और लिंग को सर्वदा गले में धारण करते हैं, जोकि संप्रति भी काशी में (जंगमवाडी मुहल्ला में) वर्तमान हैं। और हरिकृष्ण शास्त्री संग्रहीत ब्राह्मणोत्पत्ति मार्तण्ड बम्बई का छपा हुआ ग्रन्थ में ब्राम्हण भेदकथन प्रसङ्ग से ब्रह्मखण्ड में लिखा है कि-

"कादम्बराश्च कोटाख्याःशैवाख्या ब्राह्मणास्तथा,"

इत्यादि । और पञ्चद्रविड़ ब्राह्मणों के अट्ठाइस भेद कथन प्रसङ्ग में लिखा है कि-"भेदाश्च बहवो जातास्तान् वक्ष्यामि समासतः, आदिशैवाश्च त्रिविधा वडवाश्च चतुर्विधाः, इति ।

'शिवपुराण' के ज्ञानसंहिता में भी शैवब्राह्मणों का महात्म्य संक्षेपरूप से लिखा है कि

" चण्डीपुत्रशिवस्यैव तस्माच्च पतितो ध्वजः ।
एवञ्च महिमा तेषां वह्निश्शंकरेण च" पुनः वहाँ ही शैवब्राह्मणों के प्रति श्रीशिवजीका वचन है-कि

" मम कृत्ये भवान्मुख्यो देवीकृत्ये विशेषतः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यदि भवान्नपूज्येत तत्सर्वंनिष्फलंभवेत् ॥ "
धान्यम्फलंच वस्त्रंच घृतं तैलं भवेच्च यत् तत्तत्सर्वं
त्वया ग्राह्यं न दोषायभवेत्पुनः ॥ "

यही कथा कल्पभेद से अनेक ग्रंथों में लिखा है सो मैं इस "शैव ब्राह्मणोत्पत्ति" नाम ग्रंथ में संक्षेपरूप से प्रकाश करता हूँ।

और शिवतीर्थ, विभूति, रुद्राक्ष, शिवाँर्च्चन, शिवलिंग, बिल्वपत्र, शिवनैवेद्यभोजन, पंचाक्षरजप शिवपूजन, और सदाशिवकथालाप, ये दशका-भ्यास का महात्म्य सप्रमाण लिखा गया है जो की सब वैदिक मार्गानुगामी देवभक्तों को दर्शनीय है।

डुमराँव राज,
परमहंसाश्रम।
१०—१२—१५

सकलशास्त्र पारंगत, "सर्वतंत्र स्वतंत्र
श्रीमद्योगिवर्य विप्रराजेंद्र—परमहंस
स्वामिनःपुत्रःपंडित कालिकेश्वरदत्तः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्री १००८ जगद्गुरुपंचाचार्येभ्योनमः

# हिंदीभाषाभूषितशैवब्राह्मणोत्पत्तिभूमिकायाः संस्कृतभाषायामनुवादः

## ॥ भूमिका ॥

शैवब्राह्मणोत्पत्तिरियं डुमराँव राजकीय-प्राचीन " सरस्वती भवन " स्थ हस्तलिखितपुस्तकेभ्यः काशीप्रभृतिपत्तनप्रबंधालयस्थप्रबंधेभ्यश्चोध्दृत्य संकलिताऽस्ति । ग्रंथेऽस्मिन् शाखागोत्र सूत्रादिविषयाणां स्वरूपः संक्षेपतोऽस्ति, यो हि सर्वोपयोगी वर्तते । शैवब्राह्मणा इमे तैलंग महाराष्ट्र तामिल कर्णाटक देशेष्वपि वैदिका वेद-बाह्याश्चेति भेदाभ्यां प्रथिताः सन्ति । वैदिकाः शिवभक्तिं वेदाननुसृत्याचरन्ति । अवैदिकास्तु लिंग-शूलादिचिन्हानि धारयन्ति, शिवार्चनशिवसहस्र नामपठनप्रमुखशैवकर्माणि विशेषतः कुर्वन्ति, सांबसमर्पित वस्त्र भूषणादीनामधिकारिण आत्मनो जानन्ति, बहवोजनाःपूजा पाठमुक्तशैवब्राह्मणद्वारा

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

कारयन्ति, तथा लिङ्गंसदाकंठे धारयन्ति, येहि वारा-
णस्यां ( जंगमवाडीशाखानगरे ) सद्यः सन्ति ।
अपिच हरिकृष्णशास्त्रिसंगृहीते मुंबापुरीमुद्रिते
"ब्राह्मणोत्पत्ति मार्तण्ड,, नामकग्रंथे ब्राह्मण भेदक-
थनावसरे ब्रह्मखंडे लिखितमस्तिहि–"कादंबराश्च
कोटाख्याः शैवाख्या ब्राह्मणास्तथा" इत्यादि ।
अपिच पंचद्राविडब्राह्मणानामष्टाविंशति भेद-
निरूपणावसरे लिखितमस्तिहि–"भेदाश्च बहवो
जातास्तान् वक्ष्यामि समासतः। आदिशैवाश्च त्रिवि-
धा वडवाश्चचतुर्विधाः ॥ इति,, शिवपुराणांतर्गत
ज्ञानसंहितायामपिशैवब्राह्मणानां माहात्म्यंसंक्षेप
तो लिखितमस्तिहि –"चंडीपुत्र शिवस्यैव तस्मा
च्चपतितो ध्वजः। एवंच महिमातेषां वर्धितः शंक-
रेणच ॥ इति,, पुनस्तत्रैव शैवब्राह्मणान्प्रति श्रीशि-
वस्य वचनमस्तिहि–"ममकृत्ये भवान् मुख्योदेवी
कृत्येविशेषतः। यदि भवान्नपूज्येत तत्सर्वं निष्फलं
भवेत् ॥ धान्यंफलंचवस्त्रंचघृतंतैलं भवेच्चयत् ।
तत्तत्सर्वं त्वयाग्राह्यं न दोषाय भवेत्पुनः ॥ इति,,
कथेयं कल्पभेदादनेकग्रंथेषुनिरूपिताऽस्ति, तामेवा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मस्मिन् "शैवब्राह्मणोत्पत्ति,, नामकग्रंथे निरूपयामि। अपि च शिवतीर्थं विभूती रुद्राक्षं शिवार्चनं शिवलिंगं बिल्वपत्रं शिवनैवेद्यभोजनं पंचाक्षरी जपः शिवपूजनं सदाशिवकथालापश्चेति दशकाभ्यासस्य माहात्म्यं सप्रमाणं लिखामि यद्धि सर्वै वैदिकमार्गानुसारिभिः शिवभक्तौ द्रष्टव्यं वर्तते।

डुमराँव राजधानी
परमहंसाश्रमः
१०। १२। १८

सकलशास्त्रपारंगत सर्वतंत्र-
स्वतंत्र श्रीमद्योगिवर्य विप्र-
राजेंद्र परमहंसस्वामिनः पुत्रः
पंडित कालिकेश्वरदत्तः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीमज्जगद्गुरुपंचाचार्येभ्योनमः

शैवब्राह्मणोत्पत्तिभूमिकां विमृश्य तत्कर्तुः सवि-
धेऽधोनिर्दिष्टाशयकलिता मत्प्रेषिता

# पत्रिका.

भो महाशयाः

श्रीमद्भि भवद्भिः प्रयद्धं "शैवब्राह्मणोत्पत्ति," नामानं प्रबंधं दृष्ट्वा सकलशैवमतानुगाः जनाःसंतोषसागरे निमज्जन्ति नात्रकोऽपिसंशयः । शैवमतियानामतीवोपकारकोऽयंग्रंथः । किंतु प्रबंधस्यास्य प्रस्तावनावसेर शैवा वैदिकावैदिकभेदाद्द्विधाकृताः । तत्र लिंगधराःशैवा अवैदिका इत्युट्टंकितमस्ति; लिंगधारिणो ( वीरशैवाः ) वेद बाह्या इति कथं लिलेखि अनेन ज्ञायतेऽस्मदीया ग्रंथा भवद्भिर्नावलोकिता इति । किमपि कार्यं भवेत्त द्विमृश्यकर्तव्यम् । अचिरामस्मिन्विषयेप्रत्युत्तरंप्रेषणीयम्, नोचेच्छीघ्रमग्रिमकार्यमारभ्यते; इति शिवम्

जंगमवाडीमठम् } भवदीयः वीरशैवः
श्रीक्षेत्रकाशी. } काशीनाथशर्मा काव्यतीर्थः,

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

मत्प्रेषितपत्रिकां दृष्ट्वा कानिचिद्दिनानि व्यतीत्य पंडित कालिकेश्वरदत्तमहोदयेन मन्निकटे प्रेषितं प्रत्युत्तररूपं पत्रम् ।

## (हिन्दी भाषायाम्)

श्रीमत्सु सादरं निवेदनम् ।

आपके पत्रोत्तर में विलम्ब होने का कारण यह है कि हमारा लघु भ्राता अवर भ्रातृपुत्र दोनों ज्वर दाह से अत्यंत पिडित थे अब कुछ अच्छे हैं– आप ने लिखा कि "अस्मदीया ग्रंथा नावलोकिताः" तो हमारा सिद्धांत है कि जो आर्षप्रणीत ग्रंथ है वही सबको मान्य है अन्यथा रामानुजीय नान्हकी-य इत्यादि बहुतसे मार्ग हैं कौन माना जाय कौन नहीं माना जाय " वेद प्रणिहितो धर्मोअधर्म-स्तद्विपर्ययः " इत्यादि वचनो से वैदिक मार्गमे लिंगधारण नहीं लिखाहै संवर्तागम १९ पटलमेहै " शंखचक्रधराश्चैव लिंगशूलविधारिणः । वेद-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बाह्या इतिज्ञेयास्तंत्रमार्गाधिकारिणः ” अवर शंकरदिग्विजयमे सेतुबंधरामेश्वरयात्रामे श्री ५ शंकराचार्य ने भी लिंगधारी शैवोंको खंडन किया है अवर इसके विषयमे कुछ स्वस्थ होनेपर विशेष रूपसे लिखूंगा. अन्यथा लिंगधारी शैव वैदिक है इस विषयमे आपको आर्षप्रणीत ग्रंथों से प्रमाण मिला होतो लिखिए हमको स्वीकार है हम भी धारण करेंगे. हमको किसी पक्षका आग्रह नही है जो शास्त्रसे सिद्धहो वही हमारा पक्ष है- सुविज्ञेषु किंबहुना.

आपका

पं० कालिकेश्वर

मी:कु०- व०-५ शनि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीमज्जगद्गुरवः पंचाचार्याः प्रसीदन्तु

# हिन्दीभाषामयस्यास्य पत्रस्यानुवादः

## संस्कृतभाषायाम्.

श्रीमत्सु सादरं निवेदनम्

भवतां पत्रिकायाः प्रत्युत्तरप्रदाने विलंबो जातः, तत्कारणमिदमस्तिहि ! अस्मद्भ्रातृतत्पुत्रौ ज्वरेण संपीडितावास्ताम्, किंचित् सद्यः सुष्ठुस्तः । भवद्भिर्लिखितमुहि-" अस्मदीया ग्रंथा नावलोकिताः,, इति, किंत्वस्माकं सिद्धांतोऽयमस्तिहि-येग्रंथाम-हर्षि विरचिताः संति तएवसर्वेषां मान्या भवन्ति. अन्यथा रामानुजीय नानहकीयादिबहवो मार्गा विद्यंते, को ग्राह्यःकोऽग्राह्य श्च ? "वेदप्रणिहितो धर्मो अधर्मस्तद्विपर्ययः,, इत्यादिवाक्यैर्वैदिकपथि लिंग-धारणं नप्रतिपादितम् । संवर्तागमस्यपंचदशम पटले "शंखचक्रधराश्चैव लिंगशूलविधारिणः । वेद बाह्या इति ज्ञेया स्तन्त्रमार्गाधिकारिणः ॥ इति,, अपिच शंकरदिग्विजये सेतुबंधरामेश्वरयात्रायां श्री ५ शंकराचार्येणापि लिंगधारिशैवानां मतं खंडि.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तम्। स्वल्पंस्वास्थ्यं भवदनंतरं पुनर्विषयमसुंविशेषरूपेण प्रतिपादयिष्यामि. अन्यथा लिंगधारिशैवा वैदिका वर्तन्ते इत्यस्मिन्‌विषये भवतां महर्षिप्रणीतग्रंथेभ्यः प्रमाणानि मिलिष्यंति चेल्लिखत. अंगीकारोऽस्माकमस्ति. वयमपि लिंगधारणं करिष्यामः। कस्यापिपक्षस्यास्माकमादरो नास्ति, यः शास्त्रसिद्धः सएवास्माकं पक्षोऽस्ति. सुवित्सु किंबहुना—

आश्विन कृष्ण पक्षे पंचम्य। तिथौ शनिवासरे } भवदीयः पं० कालिकेश्वरः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्पत्रिकांविमृश्यमत्प्रेषितोत्तररूपो लेखोऽयम्

श्रीमज्जगद्गुरुपंचाचार्येभ्यो नमः ।

# दुर्वाददूरीकरणम् ।

जीयाच्छ्रीनीलकंठाख्यः शिवाचार्यशिरोमणिः ।
यो वीरशैवसिद्धांतंस्थापयामास भूतले ॥ १ ॥

भो महाशया भवल्लिखितपत्रिका हस्तंगता, तत्रस्थविषयंदृष्ट्वा मनोऽपि सानंदं जातम्; भवदभिप्रायमनुसृत्यविषयोऽयंप्रतिपाद्यते । श्रीमतामभिप्रायस्तु "आर्षग्रंथनिचयैरेवमतस्यास्य वैदिकत्वं साधयितव्यमिति,,

अतएव श्रुतिस्मृतिपुराणप्रतिपादितं वीरशैवमतं तत्रस्थ प्रमाणैरेव दृढीकारिष्यामि. भवद्भिरुक्तम्

"वेद प्रणिहितो धर्मोंअधर्मस्तद्विपर्ययः"

इति । तत्सत्यमेव, यदावेदप्रतिपादितोऽयं धर्म स्तदास्वीक्रियते खलु ? अपिच श्रीमद्भिर्लिखितम् "शंकरदिग्विजये सेतुबंधरामेश्वरयात्रायां शंकराचार्यैः शैवमतं खंडितम्,, इति. एतदप्रमाणम् । स्वमतप्र-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तिष्ठापनाय मतांतरदूरीकरणंतु सर्वेषां स्वाभाविकी रीतिः खलु ! नखण्डितोऽपि खंडितोऽभूदिति विजय ग्रंथस्यमर्यादार्थंलिखंति, अपिच शंकरदिग्विजया-भिधानंग्रंथं केऽपि प्रमाणत्वेन नमानयंति । विषय-विरोधात् । अपिच संवर्तागमस्थ श्लोकोऽ यमवैदिक-स्थापनार्थमुक्तः, सोऽयम् "शंख चक्रधराश्चैव लिंग शूलविधारिणः । वेदबाह्या इति ज्ञेयास्तंत्रमार्गाधि-कारिणः ॥" इति, किंतु – आगमोऽयमष्टाविंशति संख्याकानां शैवागमानां विरुद्धस्तस्माच्छैवानां प्रमाणीभूतोनास्ति, लिंगधारणं श्रुतिसिद्धमिति प्रति पादनाय बहूनिश्रुत्यादिप्रमाणान्यत्रलिख्यंते.

सएवविषयोऽत्रारभ्यते.

यथा महानारायणोपनिषदि—

| | |
|---|---|
| निधनपतये नमः | निधनपतांतिकाय नमः |
| ऊर्ध्वाय नमः | ऊर्ध्वलिंगाय नमः |
| हिरण्याय नमः | हिरण्यलिंगाय नमः |
| सुवर्णाय नमः | सुवर्णलिंगाय नमः |
| दिव्याय नमः | दिव्यलिंगाय नमः |
| भवाय नमः | भवलिंगाय नमः |
| शर्वाय नमः | शर्वलिंगाय नमः |

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शिवाय नमः शिवलिंगाय नमः
ज्वलाय नमः ज्वललिंगाय नमः
आत्माय नमः आत्मलिंगाय नमः
परमाय नमः परमलिंगाय नमः

एतत्सोमस्य सूर्यस्य सर्वलिंगं स्थापयति पाणिमंत्रंपवित्रम् ॥ इति.

तत्रभाष्यम्

"सूर्यो. मुख्यशरीरं स्याच्छिवस्य परमात्मनः । आदित्यहृदये शिवः ।" इत्यादि स्कांदवचनरीत्या ब्रह्मांडे सूर्यमंडलांतर्वर्तित्वेन शिवस्योपासनमुक्त्वेदानीं स्वशरीरे परमेश्वरध्यानधारणोपासनान्युपदिशति. निधनपतयेनम इत्यादिना– "निधनपतये नमः" निधनं सर्वभूतलयात्मकप्रलयं तस्य पतिः प्रभुः । सर्वसंहारकर्तेत्यर्थः । एतेन महाप्रलयसाक्षित्वं शिवस्योपदिशति । "यदातमस्तन्न दिवा न रात्रिर्नसन्नचासच्छिवएव केवलः" इतिश्वेताश्वतरे तथा श्रूयते. " निधनपतांतिकाय नमः" निधनस्य मरणस्य पतिः प्रभुः । कर्तेत्यर्थः । यमस्तस्य अंतकः संहारकर्ता शिवस्तस्मै नमः । तं नमस्करोमीति भावः । यमस्यापि संहारकर्तृत्व-


CC.0- Jangamwadi Math Collection. Digitized by eGangotri

दर्शनात्ततोऽधिकत्वं शिवस्य किमायातमितिशंका-निरासार्थमुत्तरवाक्यमुक्तम् । “ यस्यब्रम्हचक्षत्रं-चोभेभवत ओदनम्” “ अत्ताचराचराग्रहणात् ” इत्यादि श्रुतिसूत्रेषु संहारकर्तृत्वस्य परब्रम्हधर्मो-पदेशात् सर्वसंहारकः शिवएव परंब्रम्हेति निश्चीयते । एतत्स्थितेरप्युपलक्षणतया जगज्जननादिकारणभूतनिष्कलपरशिवतत्वमेतद्वाक्येनोपदिश्यते ।

“ऊर्ध्वाय नमः ” इत्यनेन महदादिसर्वतत्वोर्ध्वगतशुद्धसत्वप्रधानमायाशक्तिरुच्यते-सैवाचिच्छक्तिरित्यभिहिता ।

“ऊर्ध्वलिंगाय नमः”इत्यनेन चिच्छक्त्यवच्छिन्नसदाशिवतत्वमुपदिश्यते.

“ हिरण्याय नमः ” इत्यनेन ( पश्चिमचक्रं ) तत्र स्थितगुणत्रयसमष्ट्यात्मकमहातमोरूपाविद्याशक्तिरुच्यते.

“ हिरण्यलिंगाय नमः ”इत्यनेन तदवच्छिन्नं स्वयं प्रकाशमानं भावलिंगमभिधीयते.

“सुवर्णाय नमः ” इत्यनेन (शिखाचक्रं) तत्र स्थितमलिनसत्वात्मकशक्तिरुच्यते.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

"सुवर्णलिंगाय नमः" इत्यनेन तदवच्छिन्नं च्चित्कलात्मकप्राणलिंगं निर्णीयते.

"दिव्याय नमः" इत्यनेन (सहस्रारम्) तत्रस्थ गुणत्रयप्राचुर्यात्मक महाशक्तिश्चबोध्यते.

"दिव्यलिंगाय नमः" इत्यनेन तदवच्छिन्न स्वप्रकाशमानस्वेष्टलिंगमुपदिश्यते.

"भवाय नमः" इत्यनेन (आज्ञेयचक्रम्) तत्रस्थ शुद्धांतःकरणं च बोध्यते,

"भवलिंगाय नमः" इत्यनेनतदवच्छिन्नमहा लिंगं श्रूयते.

"शर्वाय नमः" इत्यनेन तत्रस्थित व्योमत त्वानुगत पराशक्तिश्च बोध्यते.

"शर्वलिंगाय नमः" इत्यनेन तदवच्छिन्न प्रसादलिंगं निरूप्यते.

"शिवाय नमः" इत्यनेन (अनाहतचक्रम्) तत्रस्थ पवनतत्वात्मकादिशक्तिश्चनिरूप्यते.

"शिवलिंगाय नमः" इत्यनेन तदवच्छिन्नचरलिंगमुच्यते.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

"ज्वलाय नमः" इत्यनेन ( मणिपूरचक्रम् ) तत्रस्थतेजस्तत्वात्मकेच्छाशक्तिश्च बोध्यते.

"ज्वललिंगाय नमः" इत्यनेन तदवच्छिन्न शिवलिंगमुपदिश्यते.

"आत्माय नमः" इत्यनेन (स्वाधिष्ठानचक्रम्) तत्रस्थितजलतत्वात्मकज्ञानशक्तिश्च बोध्यते.

"आत्मलिंगाय नमः" इत्यनेन तदवच्छिन्नगुरुलिंगमुपदिश्यते.

"परमाय नमः" इत्यनेन ( आधारचक्रम् ) तत्रस्थक्षित्यात्मक क्रियाशक्तिश्च बोध्यते.

"परमलिंगाय नमः" इत्यनेन तदवच्छिन्नाचारलिंगमुपदिश्यते.

"एतत्सोमस्य सूर्यस्यसर्वलिंगंस्थापयति पाणिमंत्रंपवित्रम्" इत्यनेन–एतत्सोमस्य एतद्दशविधलिंगात्मकोमाशक्तिविशिष्टशिवस्य सूर्यस्य सूर्यमंडलांतर्वर्तिनः ( विशेषणपदम् ) पाणिमंत्रं करपावनकरं पवित्रं पावनं लिंगं लिंगरूपशरीरं सर्व सर्वे इत्यर्थः । स्थापयति धारयंतीत्यर्थः । रूप व्यत्ययश्छांदसः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लिंगधारणबोधकमेतच्छ्रुतिवाक्यमवलंब्यभगवंतोऽन्यासमहर्षयो लिंगपुराणे लिंगधारणं प्रतिपादयामासुः । तत्रेमे श्लोकाः प्रमाणत्वेन स्वीक्रियन्ते. लिंगपुराणे —

यजुरप्याह सर्वं वै लिंगंस्थापयतीतिच ।
तस्माद्धार्यं महालिंगं पाणिमंत्रेति मंत्रतः ॥
पाणौ लिंगं विनिक्षिप्य दीक्षाकाले गुरुः शिवम् ।
येनस्तुवति तन्मंत्रं पाणिमंत्रं वदंतिहि ॥
पवित्रत्वान्महेशस्यशिवस्यप्रतिपादनात् ।
पवित्रकरणात्पुंसां पवित्रमितिकथ्यते ॥
अतः सर्वेषुकालेषु धारयेल्लिंगमुत्तमम् ।
गच्छंस्तिष्ठन्स्वपन्जाग्रन्नुन्मिषन्निमिषन्नपि ॥
शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्र धारयेत् ॥
लिंगधारी सदा शुद्धो निजलिंगं मनोहरम् ।
अर्चयन् गंधपुष्पाद्यैः करपीठेसमाहितः ॥
नित्यानि कर्मवृंदानि तथा नैमित्तिकानिच ।
शिवार्पणधिया कुर्यात्सम्यग्ज्ञानाभिवृद्धये ॥

इत्यादिना बहुधा प्रतिपादितत्वात्—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अपिच ऋग्वेदे—

पवित्रंते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनुर्नतदामोऽश्नुते शृतास इद्वहन्तस्तत्समाशत ॥ इति .

लिङ्गधारणपरस्यास्य मंत्रस्य भाष्यमतिविस्तृतत्वेन नेह लिख्यते. किन्तु मंत्रमिदमेवानुसृत्य भगवन्तो व्यासमहर्षय इत्थमूचुः—

लिंगपुराणे—

संयोजनीयं गुरुणा पूर्वोक्तेन च वर्त्मना । तनुत्रयगतानादि मलत्रयमसौ गुरुः ॥ दीक्षात्रयेण निर्दग्ध्वा लिंगात्रितयमादिशेत् लिंगं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मंतु कारणम् ॥ धारयन्तो नराः स्थूलं कारणं संप्रयान्तिहि । कुर्यात्रिपुटिसंधानं शिवसायुज्यकारणम् ॥ वक्ष्ये त्रिपुटसंधानलक्षणं शिवयोगिनाम् । स्थूललिंगस्य देहस्य सूक्ष्मस्य मनसस्तथा ॥ कारणस्यात्मनो नित्यं कुर्यादैक्यमतंद्रितः । अनेन धारयेल्लिंगं ध्यायेच्चित्तेन शंकरम् ॥ स्वात्मना भावयत्पूर्णमैक्यभावेन सर्वतः । एतत्रिपुटसंधानलक्षणं परिकी-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

र्तितम् ॥ कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवः शिवयोगेन शिवो भवति निश्चयम् । अनेन वर्त्मना गच्छन् सजीवन्नेव शंकरः । ब्रह्माविष्ण्वादयो देवा मुनयो गौतमादयः ॥ धारयन्ति सदा लिंग मुत्तमांगे विशेषतः ॥ वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषुच । ब्राह्मणस्य समाख्यातं लिंगधारण मुत्तमम् ॥ ब्रह्मेति लिंगमाख्यातं ब्रह्मणःपतिरीश्वरः । पवित्रं तद्धिविख्यातंतत्संपर्कात्तनुः शुचिः ॥ ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते । तस्मात् पवित्रं तल्लिंगं धार्यं शैवमनामयम् ॥ अतप्ततनुरज्ञोवै ह्यघीसंसारलक्षणः । दीक्षया रहितः साक्षान्नाप्नुयाल्लिंगमुत्तमम् ॥ यः करोति तपः पूर्वं सतप्ततनुरुच्यते । परिपक्वो विमोक्षाय सोऽश्नुतेलिंगधारणम् ॥ इति

अस्मिन्नर्थे स्कंदपुराणे—

ब्रह्मणस्पतिरीशो वै ब्रह्मतल्लिंगमुच्यते ।
पवित्रं तद्धि विख्यातं तत्प्रभुर्विश्वतः स्वयम् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तत्संपर्कात् पवित्रत्वं गात्राणि कुरुते स्वयम् ।
अतप्ततनुरज्ञोवै आमस्संस्कारवर्जितः ॥
दीक्षया रहितः साक्षान्नाप्नुयाल्लिंगमुत्तमम् ।
शिवधर्माश्रिताः शांताः शिवार्चनपरायणाः ॥
ये वहंतः सदालिंगं ते यांति परमं पदम् ।
अन्यथा नहि मां प्राप्तुं शक्यं देवि तथा श्रुतिः॥इति

अस्मिन्नर्थे ब्रह्मांडपुराणे –

तपस्तप्ता तनुर्यस्य सतप्ततनुरुच्यते ।
परिपक्वो विमोक्षाय सोऽश्नुतेलिंगधारणम् ॥
नकरोति तपः पूर्वं सोऽतप्ततनुरुच्यते ।
अतप्तोऽयं विमोक्षाय नाश्नुते लिंगधारणम् ॥ इति

नारायणोपनिषदि–

नमोब्रह्मणे धारणंमेअस्त्वनिराकरणं धारयिता भूया-
सम् कर्णयोःश्रुतम् माच्योढ्वम् ममामुष्यओम् ॥

अस्यार्थः–ब्रह्मणे ब्रह्मस्वरूपाय तुभ्यम् नमः नमस्कारः अस्तु भवतु, धारयिता लिंगसंबंधी भूयासम् अहमस्मि, ( भूसत्तायामिति धातोः ) कर्णयोः श्रोत्रयोः श्रुतम् । ऋषिदेवता छंदो बीज-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शक्तिन्यास युक्त षडक्षरीमंत्रश्रवणमस्तु । दक्षिणकर्ण एव मंत्रोपदेशार्हे इत्युक्तत्वादत्र कर्णयोरिति द्विवचनं छांदसम्, अमुष्य ब्रह्मणः, ओम् ओंकार वाच्यं साकारलिंगं मम आत्मनः मामंचतीति माच्या तन्वा ऊढ्वम् वाहनीयम् । धारणीयमित्यर्थः । वह प्रापणे कप्रत्ययांतः ॥ इति.

अस्मिन्नेवार्थे स्कंदपुराणे—

ओमिति ब्रह्मपरमं लिंगाकारं महेश्वरम् ।
सर्वावस्थासु सर्वेषु कालेषु निमिषार्धतः ॥
अवियोगेन भुक्तिं च मुक्तिमिच्छन् द्विजोत्तम ।
धारयेत् पंचसु स्थानेष्वस्मिन् संलग्नमानसः ॥
उपदिष्टंच गुरुणा कर्णे तद्दिव्यरूपभाक् ।
वेदसिद्धं मंत्रराजं पंचाक्षरं जपेत् सदा ॥ इति.

अस्मिन्नेवार्थे—ब्रह्मांडपुराणेऽप्युक्तम्—

नमोऽस्तु ब्रह्मणे तुभ्यमाचार्याय महात्मने ।
तन्निराकरणं विश्वं जन्यत्वान्मृत्युनैवहि ॥
अनिराकरणं ब्रह्म कारणत्वाच्चिरंतनम् ।
अनिराकरणं मेऽस्तु धारणं देशिकोत्तम ॥
वेदशास्त्रपुराणेषु प्रसिद्धं कर्णयोः श्रुतम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अहं धारयिता देवं भूयासं सर्वकारणम् ॥
ब्रह्मविष्णवादयो देवाः प्रसिद्धाश्च तथा श्रुताः ।
ते निराकरणाः सर्वे मृत्युना सर्वशत्रुणा ॥
मे निराकरणास्त्वेते नहि धार्याः कदाचन ।
नहि धारयिता देवान् भूयासं मज्जतः सुरान् ॥
नशक्नुवन्ति मां तर्तुं मज्जन्तं मृत्युसागरे ।
ऊर्ध्वं ममेदमौलिंगं मां चाऽमुष्य समाश्रय॥ इति.

धारणाद्बहुजन्मकृतानि पापान्यचिरेण विनश्यन्ति पूजाव्रतमलूनं भवति पूजानेमः सुलभो भवति सर्वं समर्पितुं शक्यं भवति शंभुलिंगैक्यभावनया शंभुरेव भवति तस्माल्लिंगस्याधारणाद्धारणं परम् ॥ इति श्रुतिः ( श्रुतिसारभाष्योदाहृता ) अस्यार्थस्तु स्फुटएववर्तते.

ईशावास्योपनिषदि –
"तेन त्यक्तेनभुंजीथा मागृधः कस्यचिद्धनम्" इति

अस्यार्थः–तेन तत्कारणेन त्यक्ते प्रमादादिना देहाल्लिंगत्यागेसति न भुंजीथाः भोजनं नहिकुरुष्व। किंतु अनशनादिना शरीरमेवविसृजेदित्यर्थः । कस्यचित् धनं लिंगं मागृधः नस्वीकुरुष्वेत्यर्थः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

" धनं वै लिंगम् " इतिकौषीतिकी श्रुतिः ।

श्वेताश्वतरोपनिषदि–

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापीच भगवान् तस्मात्सर्वगतः शिवः ॥ इति

अस्यार्थः–सर्वेषां लिंगधारणयोग्यानां आननानि शिरांसि ग्रीवा अस्येत्युपचारवान् । अनेनमुखमस्तककंठेष्विष्टलिंगधारणयोग्यत्वं स्फुटं प्रतीयते । सर्वभूतगुहाशयः समस्तप्राणिनां गुहायां दहरपुंडरीके शेत इति । स्थित इतियावत् । सर्वव्यापी सर्वत्र व्यापकः । तस्मादतएव भगवान् शिवः सर्वगतः समस्तप्राणिनां प्राप्तः ॥ शंकरसंहितायाम्–" कृत्वा निधेहि सततं लिंगं वस्त्रेण वेष्टितम् । मस्तके कंधरे कुक्षौ वक्षस्यथ करस्थले ॥ इति. अनेनैष एवाभिप्रायो द्योतते ।

एवमादिशतशोवेदोपनिषद्वाक्यानि लिंगधारणपरत्वेन सन्ति, किम् तानि बहुधा प्रपंच्य; अल्पेनैव तद्बोधात् ।

अपिच––संक्षिप्तरीत्या महर्षिप्रणीतप्रबंधप्रतिपादितलिंगधारणादिविषयाः प्रतिपाद्यंते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

यथा-स्कंदपुराणे-शंकरसंहितायाम्—

यो हस्तपीठे निजमिष्टलिंगं विन्यस्यतल्लीनमनः प्रचारः । बाह्यक्रियासंकुलनिःस्पृहात्मा संपूजयत्यंग सवीरशैवः ॥ तदेव हस्तांबुजपीठमध्ये निधाय लिंगं परमात्मचिन्हम् । प्रपूजयेदैक्यधियोपचारैर्नरस्तु बाह्यांतरभेदभिन्नैः ॥ बाह्यपीठार्चनादेतत्करपीठार्चनं वरम् । सर्वेषां वीरशैवानां मुमुक्षूणां निरंतरम् ॥ शिवभक्तान् सदाचारनिरतान् धृतलिंगकान् । विप्रानाराधय सदा भस्म रुद्राक्षधारिणः ॥ इष्टलिंगमिदंसाक्षादरिष्टपरिहारकम् । धारयेदवधानेन शरीरे सर्वदा बुधः ॥ लिंगधारणकं नामव्रतं माहेश्वराभिधम् । यावज्जीवमिदं दत्तमिष्टलिंगं समर्चयेत् ॥ इति.

अपिच स्कंदपुराणांतर्गतशंकरसंहिताया वीरमाहेश्वरप्रशंसाप्रकरणे पिंगलनामधेयस्य ब्राह्मणबालकस्य सानंदमुनीनां महानुपदेशोऽयं वर्णितोऽस्ति.

अद्यप्रभृति साधो त्वं त्रिपुंड्रं भस्मना सह ।
सर्वांगोद्धूलनं नित्यं कुरु धर्मपरायणः ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अग्निरित्यादिभिर्मंत्रैः श्रीमत्पंचाक्षरेणवा ।
रुद्रमंत्रजपाभ्यासपरो भव समाहितः ॥
यावज्जीवमिदं दत्तमिष्टलिंगं समर्चय ।
कराब्जपीठे विन्यस्य तध्यानासक्तमानसः ॥
लिंगांगसंगिनो वत्स पुनर्जन्म न विद्यते ।
युगपज्ज्ञानसंसिद्धिः स्यात्ततो मोक्षमाप्नुयात् ॥
तस्मात्त्वं प्राणलिंगांगसंबंधी भव सर्वदा ।
पंचमुद्रान्वितान्नित्यं शिवभक्तान् समर्चय ॥ इति

लिंगपुराणे—

वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम् ।
अंतर्लिंगानुसंधाने शुचिर्बाह्येन जायते ॥
तस्मात् सर्वप्रयत्नेन गुरुणा शास्त्रवेदिना ।
अनुग्रहाय यद्दत्तं तल्लिंगं पूजयेत् सदा ॥ इति.

शिवपुराणे—वायवीयसंहितायाम्—

लिंगैर्मच्छासनादिष्टैस्त्रिपुंड्रादिभिरंकितः ।
ममोपचारनिरतः कायः कायो नचेतरः ॥ इति.

महाभारते—अनुशासनपर्वणि भीष्मंप्रति धर्मराजस्योक्तिरियम्—

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम् ।
लिंगिनं ब्राह्मणं वापि ब्राह्मणं वाऽप्यलिंगिनम् ॥ इति

भीष्मस्योत्तरम्—

सद्वृत्तिमपि विज्ञाय लिंगिने चेतरायच ।
देयमाहुर्महाभाग उभावेतौ तपस्विनौ ॥ इति.

शिवगीतायाम्—

अज्ञोपहासा भक्ताश्चभूतिरुद्राक्षधारिणः ।
लिंगिनो यश्च वा द्वेष्टि ते नैवाऽत्राधिकारिणः ॥ इति

शिवरहस्ये—

मम तत्वमविज्ञाय वेदबाह्याभवंत्यतः ।
भजंति वेदबाह्यास्ते मदन्यममरं भ्रमात् ॥
मदन्यपूजासंसक्ता लब्ध्वा जन्मानि कोटिशः ।
प्राप्नुवंत्यतिघोराणि नरकाणि पुनः पुनः ॥
वैदिकास्तु सदाचारा वेदोक्ताचाररतत्पराः ।
भजंति मां प्रयत्नेन वेदान्विश्वस्य संततम् ॥
ये मां विश्वाधिकं रुद्रं भजंत्यन्यपराङ्मुखाः ।
ते वैदिका इतिप्रोक्ता मद्भक्ताश्चतएवहि ॥
ये भस्मोद्धूलितांगास्त्रिपुंड्रांकिमस्तकाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ये रुद्राक्षलसत्कंठा रुद्राक्षकरकंकणाः !
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मल्लिंगार्चनासक्ता ममलिंगांगसंगिनः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मद्ध्यानपरा नित्यमन्यध्यानाविवर्जिताः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मन्नामनिरता अन्यनामपराङ्मुखाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मत्कथासु संसक्ताः संत्यक्तान्यकथाः सदा ।
ते वैदिकाइति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मन्निरीक्षणासक्ताः संत्यक्तान्यनिरीक्षणाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मत्तीर्थोदपा नित्यमन्यतीर्थपराङ्मुखाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मन्नैवेद्यपुष्टांगा मद्घ्रातघ्राणनप्रियाः ।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये मत्क्षेत्रगतावासास्त्यक्तान्यक्षेत्रसंश्रयाः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये महेश महादेव नीलकंठेति वादिनः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये देवोत्तम देवेश देववंद्येति वादिनः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये विष्णुपूज्य विश्वात्मन् विधिपूज्येतिवादिनः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥
ये विष्णुविधिचंद्रेंद्रविद्यातातेतिवादिनः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च तएवहि ॥
ये सर्वज्ञाखिलाधार हर धीरेतिवादिनः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्च तएवहि ॥
एतादृशा महाशैवा मदेकपरदेवताः।
ते वैदिका इति प्रोक्ता मद्भक्ताश्चतएवहि ॥

इत्यादिप्रमाणैर्वीरशैवानामेव वैदिकत्वं संभवतीत्यवधारयितव्यम्। अलमतिविस्तरेण। शुभं भूयात् ॥

जंगमवाडी मठ
श्रीकाशीक्षेत्रम्

भवदीयः—
वीरशैवः श्रीकाशीनाथशर्मा
काव्यतीर्थः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीगुरवे नमः ।

# श्रीमत्सु निवेदनम् ।

भवदभिप्रायमनुसृत्य वैदिकत्वप्रतिपादकं लेखनं प्रेषितमास्ति, लेखनेऽस्मिन् स्वल्परीत्या विषयाः प्रतिपादिताः सन्ति; किम् बहुना लेखनेन ? इयद्भिः प्रमाणैः श्रीमतां संतुष्टिर्नस्यात् तदा बहुविस्तृतत्वेन प्रतिपाद्यते. इति शम् ।

भवदीयः

Datad 25-9-1916. } वीरशैवः काशीनाथशर्मा काव्यतीर्थः ।

पत्रिकयानया साकं लेखनमिदमाश्विन कृष्णपक्षे त्रयोदश्यांतिथौ पंडितकालिकेश्वरदत्तमहोदयस्य सविधे रजिष्टर द्वारा प्रेषितमभूत् ।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रीगुरवे नमः ।

मया प्रेषितं लेखं विमृश्य बहूनि दिनानि नीत्वा पंडित कालिकेश्वरदत्तमहोदयैर्दत्तमुत्तरम् ।

श्रीगणेशाय नमः ॥ श्रीमत्सु वीरशैवमहोदयेषु सादरं निवेदनम् । यन्नारायणोपनिषच्छुत्या लिंगधारणं प्रतिपादितं तत्तु असंगतमेव प्रतिभाति. "अतप्ततनुर्न तदामोऽश्नुते" इति श्रुत्यापि लिंगधारणं नायाति तस्यास्तपःपरत्वात् प्रकरणांतरे पाठाच्च । यदुक्तं भवता—"स्वमतस्थापनायान्यमतखंडनं सर्वेषां स्वाभाविकी रीतिः,, इति. तत्तु पक्षपातिनां न त्वाप्तानामेतादृशी रीतिः ; श्रीशंकराचार्यस्त्वाप्तः । अतएव तत्रैव कथितः स्वमतान्यपि तेन खंडितानि, अतियत्नैरपि साधितानि तैरित्यादि । यदुक्तं भवता—"संवर्तागमस्थश्लोकोऽयमवैदिकस्थापनार्थमुद्धृत,, इत्यत्र किंचिन्नियामकं न दत्तम् । पुनः जीयाच्छ्रीनीलकंठाख्येत्यादि श्लोकेनैव ज्ञायते यदिदं वीरशैवमतं नीलकंठाख्येन स्थापित मिति । यल्लिंगपुराणवचनैर्लिंगधारणं प्रतिपादितम् तस्यायमाशयः, दीक्षाकाले गुरुः शिष्यायैकं लिंगं दद्यात् स शिष्य आजन्मपर्यंतं तस्यैव पूजनं कुर्यात् क्षणमात्रमपि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

नविस्मरेत् । तदुक्तम् प्रयोगपारिजाते—श्वोधृतं मध्यमं चैव विक्रीतं चैवाधमं स्मृतम् । गुरोर्दत्तंतु यल्लिंगमुत्तमं परिकीर्तितम् ॥ तस्माद्वाहुगलादिषु-सर्वदा लिंगधारणमनुचितम् । स्कंदपुराणांतर्गत-वचनैर्यल्लिगपूजनं हस्तपीठे कुर्यादिति तत्तु सत्यम् । यच्छिवपुराणवचनैर्लिंगधारणं प्रतिपादितं तस्या-यमाशयः । लिंगशब्दस्तु चिन्हबोधकः । अर्थात् विभूतिरुद्राक्षधारणं सर्वदा कार्यम् । तदुक्तं शिवर-हस्ये—तृतीयांशे दक्षयज्ञप्रमथने त्रिपुंड्रधारणं कृत्वा युद्धार्थमुपस्थितं परशुरामंप्रति वीरभद्रः प्राह "त्यज त्रिपुंड्रं यदि ते युद्धकांक्षा मया सह" इत्यादि वाक्यं श्रुत्वा परशुरामो विभूतिरुद्राक्षं त्यक्त्वा पुनर्युद्धार्थ-मागतः । " युद्धार्थमागतं दृष्ट्वा शिवलिंगविव-र्जितम् । चकार भस्मसादाशु जामदग्निं गणैः सह ॥ " अत्र पाषाणादिलिंगधारणं नद्यायाति किंतु विभूतिरुद्राक्षवर्जितमित्यर्थः । अन्यथैषां पुराणधर्मशास्त्रादिवाक्यानां का गतिः ।

स्कांदे वायुसंहितायाम्—

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्चसंस्मृतः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्रुतिसारमयः श्रौतः स्वतंत्र इतरो मतः ॥इति॥

कौर्मे चतुर्दशाध्याये—

चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।
कपालं मुद्गलं वामं भैरवं पांचरात्रकम् ॥
पाखंडिनो विकर्मास्थान् वामाचारांस्तथैवच । पांच-
रात्रान् पाशुपतान् वाङ्मात्रेणाऽपिनार्चयेत् ॥ इति

शिवरहस्ये तृतीयांशे—

रुद्राक्षधारणं हित्वा कंठपाषाणधारणम् ।
ममाप्रीतिकरं पापकारणं तद्गुणोत्तमाः ॥ इति.

आश्वलायनस्मृतौ षष्ठाध्याये—

त्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः ।
ते धारयेयुश्चिन्हानि शिवयोर्भिन्नबुद्धयः ॥ इति

परमेश्वरतंत्रे हरगौरीसंवादेऽप्युक्तम्—

सर्वकर्मपरिभ्रष्टाः शिश्नोदरपरायणाः ।
पाखंडाचारनिरताः प्रोक्तास्ते वीरवैष्णवाः ॥
वेदमार्गपरिभ्रष्टास्तंत्रमार्गानुगामिनः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शिवलिंगधरा नित्यं वीरशैवाः प्रकीर्तिताः ॥ इति

तथा कालिकोपपुराणे–

शंखचक्रधरो विप्रो लिंगशूलधरस्तथा ।
यस्य देशे वसेन्नित्यं राज्यभंगो भवेद्ध्रुवम् ॥ इति.

हेमाद्रौ प्रायश्चित्तखंडे–

शृणु राम महाबाहो लिंगचक्रादिधारणम् ।
शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥ इति

मत्स्यपुराणेऽष्टमाध्यायेऽपि–

वर्जयेल्लिंगिनः सर्वान् शुद्धकालेतु धर्मवित् । इति

तत्रैव प्रतिष्ठाप्रकरणे–

नैतद्धिशीलेन न नास्तिकेन न लिंगिनास्थापनमत्रकार्यम् ॥ इति.

तथा स्कांदे सूतसंहितायाम्–

यो वेदधर्ममुत्सृज्य वर्ततेऽन्यप्रमाणतः ।
कुंडानि तस्य शिक्षार्थं यमलोके वसंतिहि ॥
ये कुशास्त्राभियोगेन वर्तयंति ह मानवाः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अधोमुखोर्द्धपादास्ते यास्यंति नरकार्णवम् ॥
कामाचाराःपाशुपतास्तथावै लिंगधारिणः ।
तप्तमुद्रांकिता येच वैखानसमतं गताः ॥
ते सर्वे निरयं यांति वेदमार्गबहिष्कृताः ।
वेदोक्त एव सद्धर्मस्तस्मात्कुर्यान्नरःसदा ॥

इत्यादिबहुशो वाक्यानि संति विस्तरभयान्नेह लिख्यंते । तथा पूर्वोक्तविधिनिषेधवाक्यानां समन्वयेनेत्थं निर्गलितः सिद्धांतः । यत्र यत्राशिवलिंगधारणं कर्तव्यमित्युक्तम् तत्र तत्र लिंगशब्देन चिन्हं विभूतिरुद्राक्षधारणं सर्वदा कर्तव्यमित्याशयः ।
यत्र लिंगधारणंनकर्तव्यमित्युक्तं तन्निषेधवाक्यानां पाषाणादिलिंगधारणतया चारितार्थ्यं बोध्यम् । अन्यथा तत्तद्वाक्यानां वैयर्थापत्तिः स्यात् । पुराणादावपि ऋषीणां स्वरूपवर्णनेऽपि लिंगधारणं नोक्तम्। "भस्मसंदिग्धसर्वांगं कौपीनाच्छादनान्वितम् । रुद्राक्षमालाभरणैर्जटावल्कलसंयुतम् ॥ इत्यादि,, धर्मशास्त्रादावपि वैदिकशुद्धब्राह्मणानां स्वरूपवर्णनेऽप्युक्तम् पाराशरेण देवीभागवते—
वैणवं धारयेद्यष्टिं सोदकं च कमंडलुम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पवित्रमुपवीतंच त्रिपुंड्रोद्धूलनं द्विजः ॥
एतादृशानि लिंगानि यस्य संति महात्मनः ।
सत्यमेव मया प्रोक्तं सफलं तस्य जीवितम् ॥

इत्यादि, किं बहुजल्पनेनेति शिवम् ॥
बहुकार्यभारतयोत्तरे विलंबो जातस्तत् क्षम्यतामिति

भवन्मंगलाकांक्षी

पं. कालिकेश्वरदत्तः ।

परमहंस आश्रम, राज डुमराँव ।

वेदसप्तांकभूसंमिते वैक्रमे
चैत्रशुक्ले शनौ पूर्णिमायां तिथौ ।
प्रेष्यते चोत्तरं सप्रमाणं मया
पक्षपातं विहायावलोक्यं मुदा ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तल्लिखितलेखममुं विमृश्य मत्प्रेषितस्तत्खंडनात्मको लेखोऽयम्

श्री १००८ जगद्गुरुपंचाचार्येभ्यो नमः

पंचानन तनूद्भूतान् पंचाक्षरमनूपमान् ।
पंचसूत्रकृतो वंदे पंचाचार्यान् जगद्गुरून् ॥

भो महाशया भवल्लिखितविषय मिलितं पत्रमेकं करंगतम् भवदभिप्रायोऽप्यबोधि; भवदेतदभिप्रायः पंडितानां नहिकदाप्यनुमतिः । अज्ञातशास्त्रमर्यादात्वात् । प्रथमं भवता प्रेषितं पत्रमेकम्, तत्रैवं प्रतिपादितमासीत्; आर्षग्रंथेषु लिंगधारणं प्रतिपादितंचेत् लिंगधारणविषये मदनुमतिर्वर्ततइति । तथैव बहुशो वेदवाक्यानि पुराणवाक्यान्युपनिषद्वाक्यानि गीतावाक्यानि च विलिख्य प्रेषितानि भवत्सविधे । अहं त्वित्थं जाने भवान् मत्प्रेषित विषयस्वरूपं नजानाति किंतु अर्थस्यानर्थमेव कल्पयतीति । नास्ति यद्यनर्थकल्पनमित्युक्तंचेत् "यत्रयत्र शिवलिंगधारणं कर्तव्यमित्युक्तम् तत्र तत्र लिंगशब्देन चिन्हं भस्मरुद्राक्ष धारणं कर्तव्यम्, यत्र लिंगधारणं नकर्तव्यमित्युक्तम् तन्निषेधवाक्यानां पाषाणादिलिंगधारणतया चारितार्थ्यं बोध्यम्,, इति विचारासहं वाक्यं कदापि नलिखितवानासीत् । यत्र लिंग-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शब्दस्य चिन्हार्थं कुर्यात् यत्र च शिवरूपार्थं कुर्यादित्य ज्ञात्वैव मनस्तदर्थएवविलीय लिखितवानितिमन्येऽहम् । एतत्तु सर्वशास्त्रविरुद्धं लोकविरुद्धं सर्वविरुद्धमत्यसंगतंचेति पुनःपुनर्वक्तुमवकाशोऽस्ति । भवत्वेतद्विमर्शनंपश्चात् करोमि । प्रथमतो भवल्लेखनरीतिंविमर्शयामि । यन्मयाप्रेषितपत्रिकायामादौ मंगलमाचरितं नीलकंठशिवाचार्याणाम् । तन्मंगलमात्रेण नीलकंठशिवाचार्या एव वीरशैवमतस्थापका इति भवन्मनस्युट्टंकितामिति भवद्वाक्येनैव प्रतिभाति एतेन ज्ञायते वीरशैवमतस्य तिलांशस्वरूपमपि भवच्चेतोगोचरतां नायातमिति, नोजानीयादित्थम् । परमपवित्रमेतद्वीरशैवमतं रेवणसिद्धशिवाचार्य, मरुळसिद्धशिवाचार्य, एकोरामशिवाचार्य, पंडित शिवाचार्य, विश्वाराध्यशिवाचार्यनामाभिः प्रसिद्धाः पंचाचार्याः कलियुगे सोमनाथ, सिद्धेश्वर, रामनाथलिंग, मल्लिकार्जुन, विश्वनाथलिंगेभ्यः शिवाज्ञानुसारेण क्रमेणोद्भूय स्थापयामासुः । मतांतरवदेतन्मतमाधुनिकं नहि किंतुप्रत्येकयुगस्थितमित्येतास्मिन् विषये सुप्रबोधागम स्वयंभुवागमाद्यागमा द्रष्टव्याः । अपिच वीरशैवसिद्धांतस्थापनार्थं मतांतरवदेकैकं भाष्यं नारच्यत । किंतु

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बहूनि भाष्याण्यरच्यंत । पंचाचार्याः क्रमेण रेणुक-भाष्यं, दारुकभाष्यं, एकोरामभाष्यं, पण्डित-भाष्यं, विश्वाराध्यभाष्यं चेति पंच भाष्याणि रच-यामासुः । विनैतानि नीलकंठशिवाचार्या नीलकंठ-भाष्यं श्रीकंठशिवाचार्याः श्रीकंठभाष्यं श्रीकर-शिवाचार्याः श्रीकरभाष्यं सर्वेश्वरशिवाचार्याः सर्वेश्वरभाष्यं च विलिलिखुः । अपिच चोलरेणुक-भाष्यं श्रुतिसारभाष्यं चेति प्रसिद्धे द्वे भाष्ये वर्तेते । तथा दशोपनिषदामुपरि लिंगधारणप्रति-पादकानि भाष्याणि मंचणपंडित कालहस्ति दीक्षि-तादयश्चक्रुः । इयत्सु भाष्येषु नीलकंठशिवाचार्य विरचितं भाष्यं वरीवर्ति, अतएव तत्पूज्यपादाना-मेतद्विशेषणं दत्वा मंगलमाचरितम् । नत्वन्यत् किंचित्तत्वम् । अतएतत्सर्वं प्रपंचितं मया भवाने-तद्विषये मामुद्येदिति । भवतु । यदुक्तं भवता " यन्नारायणोपनिषच्छ्रुत्या लिङ्गधारणं प्रतिपादि-तम् तत्तु असंगतमेव प्रतिभाति " इति वदतो भवतो वाक्यमेवासंगतं विद्यते निधनपतये नम इत्यारभ्य पाणिमंत्रं पवित्रमिति पर्यंतमुक्तमरीत्या स्थितं लिंगधारणपरं भाष्यं न ज्ञातमिति ज्ञायते । वीरशैवशास्त्राननुभवात् । महर्षिपुंगवा नारायण-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

महर्षयो मनसा लिंगधारणपरत्वेनैतामुपनिषदं रचयामासुः । नत्वन्यविषयपरत्वेन। एतस्या उपनिषदोवसवपंडिताराध्या भाष्यं चक्रुः, द्रष्टुमिच्छाचेद्रष्टव्यम् ।

सर्वमेतदविचार्यान्यदेव प्रपंचितम् भवतु का हानिः "अतप्ततनुर्न तदामोऽश्नुते" इति श्रुत्याऽपि लिंगधारणं नायाति तस्यास्तपःपरत्वात् प्रकरणांतरे पाठाच्च" इत्युक्तम्, नैतद्विचारसहम्। ऋग्वेदशैवभाष्यकारास्तथा बहवः पंडितपुंगवा मंत्रस्यास्य व्याख्यानं तपःपरं नहि चक्रुस्तथा मंत्रममुं प्रकरणांतरेऽपि न गणयामासुःसर्वमंत्राणामपि लिंगधारणपरत्वेनैव व्याख्यां चक्रुः। मंत्रस्यास्य विषये भगवद्व्यासमहर्षयोऽपि स्वकृतपुराणेषु तपःपरत्वं न मानयामासुः। किंतु लिंगधारणपरत्वमेव । तत्प्रतिपादन पराः श्लोकाः पूर्वं प्रकटितास्तत्रैव द्रष्टव्याः। सर्वरीत्या मंत्रस्यास्य लिंगधारणसिद्धत्वेन भवदुक्तिरसमंजसा बभूवेत्यलम् । मया पूर्वं लिखितमासीत् "स्वमतस्थापनायान्यमतखंडनं सर्वेषां स्वाभाविकी रीतिः" इति, अस्मिन् विषये भवतोक्तम् "तत्तु पक्षपातिनां नत्वाप्तानामेतादृशीरीतिः श्री

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

शङ्कराचार्यस्त्वाप्तः ” इति; शङ्कराचार्यो भवद्विषये आप्त उत सर्वेषां विषये ? नाद्यः पक्षः शोभां कलयति भवद्वाक्यविरोधापत्तेः, यदुक्तं भवता शैवब्राह्मणोत्पत्तिनामकग्रंथे वयं वैदिकशैवा इति। शैवाः शंकराचार्यसिद्धांतं न मानयंति तत्र तानुद्दिश्य मोक्तत्वात्। किंतु स्मार्ता मानयंति तेषां सर्वदेवतानां पूजाध्यानविहितत्वात्। शंकराचार्यमतानुयायिनः शिवंपूजयंति विष्णुं पूजयंति सूर्यं पूजयंति तथा सर्वदेवानपिपूजयंति, शैवानामेतदतिविरुद्धम् तच्छास्त्रेषु निषिद्धश्रवणात्। यदि भवानुच्येत शंकराचार्यमतानुयाय्यहमिति,तथाचेदद्यैव भवति शैवत्वं खंडितम् स्मार्तत्वं सिद्धम्। यदि भवान् शैवो भवद्विषयेऽपि शंकराचार्यो नाप्तःसंजातः। न द्वितीयःपक्षः, सर्वेषां विषये शंकराचार्य आप्त इत्येतद्बधिरकर्ण जापमनुकरोति. शंकराचार्यःसर्वेषांविषये यद्याप्तस्तत्सिद्धांतं द्वैतद्वैताद्वैत विशिष्टाद्वैत शक्तिविशिष्टाद्वैतादिमतानुयायिनः किमर्थं खंडयामासुः? विषयएषोऽनाकलितरमणीय इति त्यज्यते.

पुनरुक्तं भवता “स्वमतान्यपि तेन खंडितानि अतियत्नैरपि साधितानि,, इति. सर्वसिद्धांत स्थापनाचार्याःस्वसिद्धांतान् शंकासमाधानपूर्वकं स्था-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पर्यंति, एतत्खंडनं जातं किम् भवन्मते? अत्यस्वारस्य कलितेयमुक्तिरिति त्यजामि. मया प्रथमं वेदवाक्यानि नानापुराणवाक्यानि च लिंगधारणसिद्ध्यर्थं लिखितान्यासन् तानि सर्वाणि संत्यज्य भवतेत्थमुक्तमस्ति "यल्लिंगपुराणवचनैर्लिंगधारणं प्रतिपादितं तस्यायमाशयः, दीक्षाकाले गुरुः शिष्यायैकं लिंगं दद्यात् स शिष्य आजन्मपर्यंतं तस्यैव पूजनं कुर्यात् क्षणमात्रमपि न विस्मरेत्,, इति. भवदीया जना एतदुक्तरीत्या क्षणमात्रं लिंगमविस्मृत्य सन्ति किम्? एष मार्गः केवलं वीरशैवानामेव वर्तते; अतएव मया लिंगपुराणवाक्यानि पूर्वं प्रदर्शितानि. "अतः सर्वेषु कालेषु धारयेल्लिंगमुत्तमम्। गच्छंस्तिष्ठन्स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि॥ शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्र धारयेत्॥ इत्यादीनि। एतदभिप्रायो लिंगं नधृत्वा तथैव करपीठे संस्थाप्य पूजयेदिति बभूव किम्? उपरि निर्दिष्टश्लोकाभिप्रायः कुत्र लयं गतः? नहि भवत्कथनानुसारेणैषोऽभिप्रायःसंगच्छते. स्वार्थस्यानर्थ कल्पनरूपदोषापत्तेः।व्यासमहर्षेराशयोऽयं केवलं वीरशैवानामेति बाला अपि मन्यंते किंबहुनोक्तेन। एतद्विषये प्रयोगपारिजातस्थः श्लोकएकः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

प्रमाणत्वेन स्वीकृतः । मल्लिखितपुराणवाक्यानां श्लोकस्यास्य चाभिप्रायोऽतीवभिन्नो वर्तते. सूक्ष्मबुद्ध्या भवानेव विचारयतु नाहं कथयाम्यास्मिन्नभिप्रायेऽधिकमितिदिक् ।

एवमुक्त्वा पुनः"तस्माद्बाहुगलादिषु सर्वदा लिंगधारणमनुचितम्" इति भवदनुमतिः प्रदर्शिता । एतदाश्चर्यमेवेति भाति, नह्येतदास्तिकमहाभागानामाचरणम् । पुराणनिगमागमसिद्धांतग्रंथविरोधापत्तेः ।

कृत्वा निधेहि सततं लिंगं वस्त्रेण वेष्टितम् ।
मस्तके कंधरे कुक्षौ वक्षस्यथ करस्थले ॥

इति शंकरसंहितायाम् ।

इष्टलिंगमिदं साक्षादरिष्टपरिहारकम् ।
धारयेदवधानेन शरीरे सर्वदा बुधः ॥
मूर्ध्नि वा कंठदेशेवा कक्षे वक्षःस्थलेऽपि वा ।
कुक्षौ हस्ततले वाऽपि धारयेल्लिंगमैश्वरम् ॥
नाभेरधस्ताल्लिंगस्य धारणं पापकारणम् ।
जटाग्रे त्रिकभागेच मलस्थाने न धारयेत् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इति सिद्धांतशिखामणौ ।

ओमिति ब्रह्म परमं लिंगाकारं महेश्वरम् ।
सर्वावस्थासु सर्वेषु कालेषु निमिषार्धतः ॥
अवियोगेन भुक्तिंच मुक्तिमिच्छन् द्विजोत्तम ।
धारयेत्पंचसु स्थानेष्वस्मिन् संलग्नमानसः ॥

इति. स्कांदे.

उत्तमांगे गले वाऽपि कक्षे वक्षःस्थलेऽपि वा ।
तथाहस्ततले वाऽपि शिवलिंगं धरेत्सुधीः ॥

इति. कामिकागमे.

जातके मृतके शौचे मलमूत्रविसर्जने ।
रतावशुद्धावुद्योगे रणे निद्रादिषु प्रिये ॥
कर्मणा मनसा वाचा जाग्रत्स्वप्नसुषुप्तिषु ।
न लिंगमुत्सृजेत्क्वापि प्राणैः कंठगतैरपि ॥

इति पारमेश्वरागमे.

"यज्ञोपवीतं परमं पवित्रम्" इति वद्वोद्धव्यम् । इत्याद्यनेकप्रमाणैर्लिंगं सदा शरीरे धार्यमित्युक्त्वा शरीराद्यदि वियोगे सति प्रायश्चित्तमप्यूचुः शास्त्र-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

विशारदाः । यथा सिद्धांतशिखामणौ शिष्यं प्रति गुरूपदेशोऽयम् —

यदि प्रमादात्पतिते लिंगे देहान्महीतले ।
प्राणान् विमुंच सहसा प्राप्तये मोक्षसंपदः ॥

इत्यादिपुराणागमोपबृंहितवाक्यानां का गतिर्भवानेव विचारयतु । यदुक्तं भवता बाहुगलादिषु न धार्यमिति तदसमंजसम्, लिंगधारणमुक्तस्थानेषु कर्तव्यमिति घंटाघोषं राद्धांतितम् ।

पुनर्भवतोक्तम् " यच्छिवपुराणवचनैर्लिंगधारणं प्रतिपादितम् तस्यायमाशयः , लिंगशब्दश्चिन्हबोधकः ; अर्थात् विभूतिरुद्राक्ष धारणं सर्वदा कार्यम्,, इति. लिंगशब्दश्चिन्हबोधक इत्यस्मिन् विषये शिवरहस्यप्रमाणं दत्तम् किंतु शिवपुराणोदाहृतश्लोकेन यद्भवान् केवलं विभूतिरुद्राक्षधारणं प्रदर्शयति तदसंगतम्, त्रिपुंड्रादिभिरित्यत्रादिपदसत्वात् लिंगैरिति बहुवचनप्रयोगाच्च । अत्रादिपदेन रुद्राक्षलिंगपदे ग्राह्ये । यद्वा समुच्चयार्थ बोधकचकारपदसत्वेन शैवशास्त्रप्रसिद्धै रखंडलिंगमिष्टलिंगंभावलिंगंप्राणलिंगमाचारलिंगंगुरुलिंगंशिवलिंगंचरलिंगंप्रसादलिंगं महालिंगंचेति दशविधलिंगै स्त्रिपुंड्रादि भिश्चेत्यर्थो बोध्यः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुनर्भवानग्रे गत्वा स्वसिद्धांतं प्रदर्शयति यत्र यत्र शिवलिंगं धार्यमित्यायाति तत्र चिन्हरूपार्थो बोध्य इति. अनेनेत्थं ज्ञायते भवान् शास्त्रतारतम्यमेव न जानातीति, बालवदुक्तत्वात् ।

लिंगं चिन्हेऽनुमाने च सांख्योक्तप्रकृतावपि ।
शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकम् ॥ इति

मेदिनीकोशोक्तरीत्या लिंगशब्दस्य बहवोऽर्थाः संति यत्र योऽर्थो ग्राह्यस्तथा त्याज्य इति नियमाभावएव संजातः। भोजनकाले "सैंधवमानय" इत्युक्ते समयमनुसृत्य लवणानयनं सर्वसंमतम्; सैंधवशब्दस्तुरगेऽपिं प्रयुज्यत इति मत्वा तत्काले तुरगानयनमत्यंतमनुचितं खलु ! एवमेव बोध्यं भवदुक्तवचनजालम् । यत्र लिंगधारणमिति कथितं तत्र विभूतिरुद्राक्षधारणमेव निश्चीयत इतिभवन्निश्चयात्मकानुमतिर्विद्यतेचेत् प्रदर्शयतु भवद्बुद्धिवैचित्र्यमधोनिर्दिष्टानां प्रमाणत्वेन संगृहीतानां श्लोकानां विषये । तएवात्र प्रतिपाद्यंते ।

यथा—व्यासजैमिनिसंवादे—

धारयेद्यस्तु हस्तेन लिंगाकारं शिवं सदा ।
तस्य हस्तस्थितं विद्धि मत्पदं संपदां पदम् ॥



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अपवर्गेप्सुरीशानं गले भक्तिपरायणः ।
ईश्वरेणाऽविनाभावसंबंधं कर्तुरात्मनः ॥
मूर्ध्नि वा धारयेल्लिंगं न कदाचिद्वियोजयेत् ।
शिवस्य नित्यसंयोगः परया निजनिष्ठया ॥
ब्रह्मविष्णुसुरेशादिदेवताः परया मुदा ।
शिरोभिर्धारयंत्येते शिवलिंगमहर्निशम् ॥
अक्षपादादयः सर्वाः शक्तयः परया मुदा ।
धारयंत्यलिकाग्रेषु शिवलिंगं च सादरम् ॥
कंठेषु हरकंठादि मुनयो मनवस्तथा ।
सर्वदा शिवलिंगं तु धारयंति यजंति च ॥इति॥

पारमेश्वरागमे–
यस्य भस्म ललाटेऽस्ति कंठेलिंगं मदात्मकम् ।
रुद्राक्षधारणं देहे सोऽहं देवि नसंशयः ॥ इति ॥

शैवरत्नाकरे–
नाभेरधो लिंगधारी पाप्मना च स युज्यते ।
नाभ्यूर्ध्वं लिंगधारी च सौभाग्यज्ञानवर्धनः ॥
लिंगेन कायसंबंधो रहितः स्यात् पिशाचवत् ।
निमिषार्धं वियोगेन विशेषात् पातकी भवेत् ॥इति॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सिद्धांतशिखामणौ –

ब्रह्मविष्णवादयो देवा मुनयो गौतमादयः ।
धारयंति सदा लिंगमुत्तमांगे विशेषतः ॥
लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः ।
धारयंत्यलिकाग्रेषु शिवलिंगमहर्निशम् ॥
वेदशास्त्रपुराणेषु कामिकाद्यागमेषु च ।
लिंगधारणमाख्यातं वीरशैवस्य निश्चयात् ॥इति॥

शंकरसंहितायाम् —

रुद्रो भूत्वायजेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ।
प्राणलिंगांगसंबंधीसरुद्रोनाऽत्र संशयः ॥ इति ॥

सिद्धांतशिखामणौ —

भूतिरुद्राक्षसंयुक्तो लिंगधारी सदा शुचिः ।
पंचाक्षरीं जपन् योगी शिवभक्त इति स्मृतः ॥इति ॥

शिवगीतायाम् —

अज्ञोपहासाभक्ताश्च भूतिरुद्राक्षधारिणः ।
लिंगिनो यश्च वा द्वेष्टि ते नैवात्राधिकारिणः ॥

इत्याद्यनेकप्रमाणानि वर्तंते तानिविलिख्य किम्? पुनरुक्तं भवता–" स्कांदे वायुसंहितायां शैवाग-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मोऽपि द्विविधः" इत्यादि. तत्सत्यम्; अष्टाविंशतिशैवागमेषु श्रुतिसंमता आगमा अष्टादश वर्तंते। एतदेव प्रतिपाद्यते शिवपुराणे—

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च स स्मृतः।
श्रुतिसारमयः श्रौतः स्वतंत्र इतरो मतः॥
स्वतंत्रो दशधा पूर्वं तथाऽष्टादशधा पुनः।
कामिकादि समाख्याभिः सिद्धः सिद्धांतसंज्ञितः॥
श्रुतिसारमयो यस्तु शतकोटिप्रविस्तरः।
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते॥ इति.

सिद्धांतशिखामणौ—

शैवतंत्रमिति प्रोक्तं सिद्धांताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत्सदा॥ इति.

वीरागमे—

सर्ववेदेषु यद् दृष्टं तत्सर्वं तु शिवागमे॥ इति.

सिद्धांतशिखामणौ—

सिद्धांताख्ये महातंत्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्॥ इति.

यच्छ्रुताबुक्तं तदागम उक्तमिति कथितम् तत्सत्यमसत्यंवेति संशयनिरासार्थं कानिचिदुदाहरणानि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

निलिख्यंते विमर्शयन्तु ।

यथा नारायणोपनिषदि –

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥ इति.

अस्याभिप्रायः कामिकागमे –

उत्तमांगे गले वाऽपि कक्षे वक्षःस्थलेऽपि वा ।
तथा हस्ततले वाऽपि शिवलिंगं धरेत्सुधीः ॥ इति.

सर्वव्यापीति पदेनाऽकथितान्यपि स्थानान्या यातानीति बोध्यम् ।

ऋग्वेदे—

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ॥ इति.

अस्याभिप्रायो वातुलागमे –

इंद्रियादागतं किंचिद्यत्सुखं तच्छिवार्पितम् ।
तत्तत्प्रसादं भोक्तव्यं तदिंद्रियमुखेनच ॥
इष्टलिंगंतु बाह्यांगे प्राणलिंगं तथांतरे ।
भावलिंगं सदैवास्मिन्नात्मांगे सुप्रतिष्ठितम् ॥
हृदयांगेषु च यथा क्रमाल्लिंगं प्रतिष्ठितम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा कर्मेंद्रियांगेषु क्रमाल्लिंगं प्रतिष्ठितम् ॥ इति.

यजुर्वेदे –

याते रुद्र शिवातनूरघोरापापकाशिनी तया नस्त
नुवा शंतमयागिरिशंताभिचाकशीहि ॥ इति.

अस्याभिप्रायो वातुलागमे –

अघोरा पापकाशीति याते रुद्र शिवा तनूः ।
यजुषा गीयते यस्मात्तस्माच्छैवोऽघवर्जितः ॥ इति.

पुनःकारणागमे –

अपापकाशीतिश्रुतं वपुस्ते शिष्टाः प्रसिद्धा-
भगवन्नपापाः । अतस्त्वदीयान पहायभक्तानन्या
नशिष्टानितिनिश्चिनोमि ॥ इति ॥

अथर्वशिखोपनिषदि –

शिवएकोध्येयःशिवंकरःसर्वमन्यत्परित्यज्य ॥इति.

अस्याभिप्रायोवातुलागमे –

लिंगभक्तिर्लिंगपूजा लिंगधारणमेवच ।
लिंगप्रसादस्वीकारो लिंगश्रवणमादरात् ॥
लिंगध्यानं लिंगमनः सर्वं लिंगमयं जगत् ॥ इति.

ब्रह्मोपनिषदि –

यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्॥इति.

अस्याभिप्रायो योगजागमे–

संसूतत्वात् समस्तेषु वस्तुष्वपितु संततम् ।
सूत्रनात् परमेशस्य सूत्रं लिंगमितीरितम् ॥ इति.

तथा वातुलागमे–

यस्य सांसारिको भावो नास्ति लज्जादयस्तथा ।
स भक्तो निश्चलो धन्यो लिंगं सर्वत्र धारयेत् ॥इति.

अथर्वशिरउपनिषदि–

रुद्रमेकत्वमाह रुद्रं शाश्वतं वै पुराणमिष्टमूर्जं तपसानुयच्छते ॥ इति

अस्याभिप्रायो वातुलागमे–

सकलं दृक्कलाग्राह्यमिष्टलिंगस्थलं महत् ।
इष्टावाप्तिकरं साक्षादनिष्टपरिहारकम् ॥
इष्टमूर्जं स्वभक्तानामनुयच्छति सर्वदा ।
इष्टलिंगमितिप्राह तस्मादाथर्वणी श्रुतिः ॥

इत्यादीनि निगमागमसमार्थप्रतिपादकान्यसंख्यानि प्रमाणानि विद्यंते विस्तरभयान्नेह लिख्यंते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पुनर्भवता "चकार मोहशास्त्राणि केशवोऽपि शिवेरितः" इत्यादि कूर्मपुराणवाक्यानि निषिद्धार्थे प्रतिपादितानि; किंतु तस्मिन्नेवपुराणे—

ईश्वरउवाच—" निर्मितंहि मयापूर्वंव्रतं पाशुपतं शुभम् । गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये॥ एषपाशुपतो योगः सेवनीयोमुमुक्षुभिः ॥ इति ॥

तथाच शिवाधिक्यप्रतिपादकानामागमानां पतिः परमेश्वरः पशुर्जीवस्तदुभयव्यतिरिक्तमचेतनं सर्वं पाश इति त्रितयज्ञानं च मोक्षकारणमिति ।

तदुक्तंसूतसंहितायाम्—ब्रह्माद्याः स्थावरांताश्च पशवः परिकीर्तिताः । तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥ मायापाशेन बध्नामि पशूंस्तान् कमलेक्षणे । तेषां पशूनां सर्वेषां मोचकोऽहं सुलोचने ॥ मामेव मोचकं प्राह श्रुतिः साध्वी सनातनी ॥ इति.

अपिच—त्रिपदार्थं चतुष्पादं महातंत्रंजगत्पतिः । प्रोक्तवान् हिमवत्पुत्र्यै धर्ममोक्षैकसाधनम् ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इत्याद्यागमपुराणवचनैश्च पाशुपतशास्त्रं मोक्षैककारणमिति प्रतिपादितम् । निषेधवाक्यापेक्षया विधिवाक्यानां प्रामाण्यातिशयः शास्त्रकारैर्मानितत्वात् पाशुपतमतं सर्वोत्तममिति राद्धांतितम् ।

पुनर्लिखितंभवता–" शिवरहस्ये–रुद्राक्षधारणं हित्वा कंठपाषाणधारणम् । ममाप्रीतिकरं पापकारणं तद्गुणोत्तमाः ॥ इति " भवतु किंचिदत्र विचारयामः । वयं तु रुद्राक्षधारणं नत्यजामः, अनेन हित्वेतिपदस्य वैयर्थ्यमर्थात् सिद्धम् । तथा वयंकंठे पाषाणधारणंकुर्मः किम् ? नहि शिवलिंगस्य । शास्त्रोक्तरीत्या मंत्रादिभिः सुसंस्कृतशिवलिंगानिभवन्मते पाषाणा भवंतिकिम् ? तथाचेदद्यैवेदं जगन्नास्तिकमयं स्यात् सर्वेषां विश्वनाथकेदारनाथादिनामभिः प्रसिद्धानां लिंगानां नामविपर्ययः स्याच्च, उदाहरणमेतदविचार्यैव दत्तम् नतु तत्वतः । रुद्राक्षधारणहीनास्तथा कंठपाषाणधारिणः केऽपि वा भवेयुस्तेषांविषये प्रयोक्तव्यमिति । ननु पाषाण धारणमेव शिवलिंगधारणमिति भवदभिप्रायश्चेद्विनिगमनाभावेन कंठपाषाणधारणं हित्वा केवलं रुद्राक्षधारणमित्यन्वयो बोद्धव्यः । इत्थं क्रियतेचेत् "लिंगधारणहीनो यस्तं त्यजेदंत्यजं यथा" इत्यादि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लिंगधारणपठितवाक्यानां सार्थक्यं स्यात् ।
पुनर्भवताऽश्वलायनस्मृत्युदाहरणं दत्तम्

" त्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः ।
तेधारयेयुश्चिन्हानिशिवयोर्भिन्नबुद्धयः ॥ " इति ।

स्मृतिकर्तुरस्याशयएव भवता न ज्ञात इति भाति, इत्थमस्याशयः—येशिवयोःपार्वतीपरमेश्वरयोःशिवः पृथक् शिवा पृथक् चेति भिन्नबुद्धयो भूत्वा पृथक् शिव चिन्हानि पृथक् पार्वतीचिन्हानि च धारयेयुस्ते नास्तिका इति। वयंतु पार्वतीपरमेश्वरयोः कमपिभेदं नमानयामः, वयं शक्तिविशिष्टाद्वैतसिद्धांतवादिन इति भवान् नजानातिकिम् ? वयं शिवायाः शिवस्य च समवायसंबंधं मानयामः। शिवः पृथक् शिवा पृथक् चेतिचेत् " उमासहायं परमेश्वरंप्रभुम् " इत्याद्युपनिषद्वाक्यानां " सोमायच रुद्रायच " इत्यादि वेदवाक्यनां " एकैकवस्तुतः शैवी या शक्तिर्निर्मलापरा । अविनाभाविनी शंभोः शुचेरुष्णत्ववत्प्रभोः ॥ " इत्यादि सिद्धांतग्रंथवाक्यानां "वागर्थाविवसंपृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वंदे पार्वतीपरमेश्वरौ ॥ " " देहार्धयोगःशि-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वयोः स श्रेयांसि तनोतु वः । दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते ॥" इत्यादि कालिदासभोजदेवादिकृतमंगलानांच वैयर्थ्यं भवेत् । इदमेव तत्वम् । अस्य श्लोकस्याभिप्रायो भवत्सिद्धांतस्यैव हानिं करोतीति बोध्यम् । यद्वा-शिवयोर्भिन्नबुद्ध्यो भूत्वा पार्वतीपरमेश्वरौ नस्त इति दुर्मतयो भूत्वा ये तु कान्यपि लोकशास्त्रविरुद्धानि चिन्हानि धारयेयुस्ते नास्तिकाः । वयं शिवो नास्ति शिवा नास्ति चेतिवाक्यं कदाप्युच्चारणंकुर्मः।किम्? परमास्तिका वयम् । अस्मादृशा आस्तिका जगतीतलेऽस्मिन् केऽपि न बभूवुर्भवंति न भविष्यंति चेतिहस्तोद्गमनपूर्वकं निगदामि । भवदुक्तमेतदुदाहरणं "काश्मीरे वसते कन्या लंकायां वसते वरः" इति वज्ज्ञेयमित्यलम् ॥

पुनर्भवतोक्तम् पारमेश्वरतंत्रे-"वेदमार्गपरिभ्रष्टास्तंत्रमार्गानुगामिनः । शिवलिंगधरा नित्यं वीरशैवाः प्रकीर्तिताः ॥ इति ॥

किंतु क्रियासारे-

परस्पराविरुद्धार्थाः शिवोक्तानिगमागमाः ।
अल्पबुद्धिभिरन्योन्यं विरोधः परिकल्प्यते ॥

इत्येष विषयः प्रथममेव प्रपंचितः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

तथा शंकर संहितायाम्—

अष्टावरणसंपन्नः पंचाचारपरायणः ।
वैदिकं कर्म कुर्वीत ज्ञानैकफलसाधनम् ॥ इति ॥

सिद्धांतशिखामणौ—

वेदधर्माभिधायित्वात् सिद्धांताख्यः शिवागमः ।
वेदबाह्यविरोधित्वाद्वेदसंमत उच्यते ॥
सिद्धांताख्ये महातंत्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागेवीरशैवमतंपरम् ॥
वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।
तस्यां रमंते ये शैवा वीरशैवाः प्रकीर्तिताः ॥

इत्यादिवाक्यानां का गतिः?। श्रुत्यर्थबोधकाग-मेषु वीरशैवमताधिक्यसत्वात् तथा चतुर्वेदेषूपनि-षत्सुचलिंगधारणविहितत्वाद्वीरशैवमतं परमवैदि-कमिति घंटाघोषं राद्धांतितम् ।

तथा कालिकोपपुराणस्य प्रमाणं दत्तम् "शंख-चक्रधरा विप्राः" इत्यादि । अनेन निषेधः प्रद-र्शितः । एतन्मतमाहात्म्ये गणनातीतानि विधिवा-

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

क्यानि वर्तंते तेषां काऽवस्था? तान्येवोच्यंतेऽल्परीत्या, कामिकागमे -

एकेन जन्मना मुक्तिर्वीराणां तु महेश्वरि ।
इतरेषां तु शैवानां मुक्तिर्जन्मत्रये भवेत् ॥ इति ॥

सूक्ष्मागमे -

वीरशैवपरोयस्तु यत्र तिष्ठति पार्वति ।
तत्तीर्थं तत्तपः शांतिस्तत्र तिष्ठामि सर्वदा ॥
सर्वं शिवमयं पश्येदन्यभावो न विद्यते ।
लिंगांगसंबंधपदार्थज्ञानं मोक्षसाधनम् ॥ इति ॥

शंकरसंहितायाम् -

क्रिमिकीटपतंगेभ्यः पशवः प्रज्ञयाधिकाः ।
पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजातयः ॥
द्विजातिष्वधिका विप्रा विप्रेषु क्रतुबुद्धयः ।
क्रतुबुद्धिषु कर्तारस्तेभ्यः सन्यासिनोऽधिकाः ॥
तेभ्यो विज्ञानिनः श्रेष्ठास्तेषु शंकरपूजकाः ।
तेषुश्रेष्ठा महाभाग ममलिंगांगसंगिनः ॥
लिंगांगसंगिष्वधिकः षट्स्थलज्ञानवान् पुमान् ।
तस्मादप्यधिकोनास्ति त्रिषुलोकेषु सर्वदा ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

स वंद्यःसर्वदा पूज्यः संसारविजिगीषुभिः ।
बहुनोक्तेन किं वत्स सएवाऽहं न संशयः ॥ इति ॥

षट्स्थलविचारो वीरशैवशास्त्रएवप्रसिद्धः, नतु शास्त्रांतर इति विज्ञेयम् ।

पुनः शंकरसंहितायाम्—

शिरोदेशेऽथवा कंठे हस्ते वक्षःस्थलेऽपि वा ।
लिंगधारणहीनो यस्तं त्यजेदंत्यजं यथा ॥
कुंडंच गोलकं चैव लिंगधारणवर्जितम् ।
तथा देवलकं चैव दृष्ट्वा चांद्रायणं चरेत् ॥
स्थूलांगे त्विष्टलिंगंतु यो न धारयाति द्विजः ।
दृष्ट्वा तं सहसा पुत्र सचैलं स्नानमाचरेत् ॥
मस्तके बाहुदंडेवा ललाटोर्ध्वप्रदेशके ।
अलिंगधारणं दृष्ट्वा कुर्यात्सूर्यावलोकनम् ॥
यो न पूजयते भक्त्या लिंगं त्रिभुवनेश्वरम् ।
नाऽसौ स्वर्गस्य मोक्षस्य नचराज्यस्य भाजनम्॥इति.

शिवधर्मोत्तरीये –

विकल्पंते महात्मानं ये मूढाः शिवयोगिनम् ।
ते यांति पितृभिः सार्धं नरकेषु न संशयः ॥ इति.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

पारमेश्वरागमे—

यः पश्येद्वीरशैवस्थं ब्रह्महत्यादिसंभवैः ।
पापैर्विमुच्यते सद्यो मुच्यतेच भवार्णवात् ॥
वीरशैवमतं सद्यो भोगमोक्षैक साधनम् ।
सर्वोत्तमं ममतं यतः सर्वोत्तमोऽस्म्यहम् ॥
न वीरशैवसदृशं मतमस्ति जगत्त्रये ।
सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम् ॥
सभस्मरुद्राक्षतनुं सलिंगं शिवयोगिनम् ।
दृष्ट्वा सद्यो विमुच्यंते पापिनोऽपि नसंशयः॥इति॥

पुनरुक्तं भवता हेमाद्रौ प्रायश्चित्तखण्डे— "श्रुणु राम महाबाहो" इत्यादि, अनेन लिङ्ग-धारिषु शूद्रत्वं कल्पितम् किन्तु गरुडपुराणे—

वंशावलिप्रयातानांलिंगधारणशालिनां ।
ज्ञानिनां शिवभक्तानां शूद्रत्वं नैव विद्यते ॥

इत्यादिना शूद्रत्वं निषिध्य

शंकरसंहितायाम्—

धृतलिंगं सदाचार निरतं द्विजपुंगवं ।
वीरमाहेश्वरं सम्यक् पूजयेद्भक्तिमान्नरः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

लिंगांगसंगं कुर्वंतं दृष्ट्वा द्विजवरं रविः ।
स्थानाच्चलत्ययं भित्वा मण्डलं मे व्रजेच्छिवम् ॥
तस्मात्सर्वं परित्यज्य सर्वभावेन सर्वदा ।
पूजयेदादरेणैव द्विजं लिंगांगसंगिनम् ॥ इति

आदित्यपुराणे मानवीय संहितायाम्—

शिवभक्तः सदा पूज्यः सएवब्राम्हणोत्तमः ॥ इति

महाभारतेऽनुशासनपर्वणि—

किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम् । लिंगिनं ब्राह्मणं वाऽपि ब्राह्मणं वाऽप्यलिंगिनम् ॥ इति

शंकरसंहितायाम्—

शिवभक्तान् सदाचारनिरतान् धृतलिंगकान् ।
विप्रानाराधय सदा भस्मरुद्राक्षधारिणः ॥ इति ॥

लिंगपुराणे--

वेदेषुशास्त्रसंघेषु पुराणेष्वागमेषुच । ब्राह्मणस्य समाख्यातं लिंगधारणमुत्तमम् ॥ इत्यादिवाक्यैर्ब्राह्मण्यं स्थापितम् कागलिरेतेषांवाक्यानां भवानेव विचारयतु ।

पुनरुक्तं मत्स्यपुराणस्योदाहरणम् "वर्जयेल्लिंगिनः सर्वान् शुद्धकालेतु धर्मवित्,, इति । अत्र

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

Acc. No. ......3026................



लिंगिन इति पदसत्वेन वीरशैवपरमेवेदंपदमितिय द्भवतोविचारोऽस्ति सोऽविचारसहः "पाषंडाः सर्वे लिंगिनः" इत्यमरकोशप्रमाणात् 'सर्वान् लिंगिनः' इत्यत्र लिंगानि त्रिपुंड्रोर्ध्वपुंड्रशिलाताम्रप्रतिमादि-लिंगानि एषां संतीतिविग्रहः। सर्वाण्येतानि मि श्रीकृत्य ये पूजयंति ते लिंगिनोभवंतीति फलितार्थः। एतेषां विषयएवकोशकारेण पाषंडशब्दः प्रयुक्तः । पाषंडानामागमनंतु शुद्धकाले निषिद्धम् । अयमेव ग्रंथकर्तुरभिप्रायः । नतु वीरशैवानां विषये, इति शिवम् ।

तत्रैव प्रतिष्ठाप्रकरणे-" नैतद्धिशीलेन ननास्तिकेन न लिंगिना स्थापनमत्र कार्यम् " इत्युक्त-मितिलिखितम्! कस्य स्थापनं न कार्यमित्याकांक्षायां किमपि नियामकं पदं न दत्तम् । अतो विषयोऽयं न विमृश्यते ।

अंते गत्वा भवतोक्तम्-सूतसंहितायाम् "यो-वेदधर्मानुत्सृज्य " इत्यादि । वयं तु वेदमार्गानु-गामिनएव " निधनपतये नमः, याते रुद्र शिवा-तनूः, पवित्रंते विततं ब्रह्मणस्पते, ओं नमो ब्रह्म



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

णेधारणं मेऽस्तु, अयं मे हस्तो भगवान्, यश्छं-दसां वृषभः, इत्यादिशतशः प्रमाणैर्वेदेषु लिंग-धारणविहितत्वात् । न वयं कुशास्त्राभिमानिनः, श्रुतितदनुसारिसिद्धांतागमाभिमानत्वात्।एषोऽभि प्रायः प्रथममेव बहुप्रमाणैः सिद्धांतितः किं तं पुनः प्रपंच्य । अत्रेदं बोध्यम् भवता कानिचिद्वा-क्यान्यवैदिकस्थापनार्थमुद्धृतानि; निषेधवाक्यापे-क्षया विशेषवाक्यानां प्रामाण्यातिशयात् तान्य प्रमाणशीलानीतिविमर्शनीयम् । "नहिंस्यात्सर्व-भूतानि नमांसमश्नीयात्" इत्यादिवाक्यैः पशु-हननमांसभक्षणादेः प्रत्यक्षविरुद्धत्वेऽपि "अग्नि षोमीयंपशुमालभेत" इत्यादि विशेषवाक्यवि-हिततद्धर्मकर्तव्यत्ववत् सर्वालिंगंस्थापयतीत्यादि-विधिना लिंगधारणतत्पूजनादेर्यावज्जीवकर्तव्य-त्वेन लिङ्गधारणं वेदसिद्धम् तद्द्वारावीरशैवमतं परमवैदिकमित्यनायासेनैव सिद्धः सिद्धांतः । मूषकग्रहणार्थं पर्वतखननं किमिति विषयोऽयं संपूरी क्रियते ।

अपिचोक्तं भवता "पुराणादावपि ऋषीणां स्वरूपवर्णने लिंगधारणं नोक्तम्" इति.

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

किंतु शिवपुराणे–

पाणिनिश्च कणादश्च कपिलो गौतमादयः ।
प्रसादसेवनाद्ध्यानादर्चनाद्धारणादपि ॥
जाता दर्शनकर्तारः श्रावयंति जगत्त्रयम् ॥ इति.

धारणादितिपदेन लिङ्गधारणंस्फुटं प्रतीयते.

शिवपीठात्समुद्भूतं तेजोमयशरीरिणम् ।
जगद्रक्षार्थमायातमिष्टलिंगेन संयुतम् ॥
भस्मरुद्राक्षमालाभिरलंकृतसुविग्रहम् ।
फालनेत्रसमायुक्तं योगदंडविमंडितम् ॥ इति.

तथा

खंडिताशेषचार्वाकसिद्धांतः शास्त्रकोविदः ।
शैवसिद्धांततत्वज्ञः समलोष्ठाश्मकांचनः ॥
द्वितीयवीरभद्रश्च कीर्तिमांश्च प्रतापवान् ।
लिंगत्रितयविज्ञानी लिंगषट्कैंद्रियाक्रियः ॥
लिंगाभिमानकलितः षट्स्थलज्ञानपंडितः ॥ इति.

तथा

वीरभद्रांशसंजातः षट्स्थलज्ञानकोविदः ।
अशेषसुगुणाधारो लिंगतत्वपरायणः ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

इत्यादिवाक्यैः पुराणेषु शिवभक्ता मुनयो लिंगधारणपरत्वेन वर्णिता इति शिवम् ।

श्रीमतां लेखनस्यैकाक्षरमप्यसंत्यज्य प्रत्युत्तरं दत्तम् । पक्षपातरहिता भवंतस्तद्विचार्य यथार्थतत्त्वं गृह्णीयुः । लेखनस्यास्योत्तरदानेच्छा यद्यस्ति, एकाक्षरमसंत्यज्य प्रत्युत्तरं देयम् । विंशतिदिनाभ्यंतरएव प्रत्युत्तरं प्रेषणीयमित्याशासे । विंशतिदिनपर्यंतं भवदुत्तरमार्गो निरीक्ष्यते नायाति चेदग्रिमकार्यमारभ्यते, इति सविनयं प्रार्थयति.

वीरशैवः काशीनाथशर्मा
काव्यतीर्थः

खंडनात्मकलेखनमिदं रजिष्टर द्वारा. D-5-5 1917 दिने तत्सविधे प्रेषितम्.... ....

इति ।

## प्रस्तावना प्रभृतिविषयस्थ शुद्धाशुद्ध पत्रिका.

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १ | मस्मिन् | ऽस्मिन् |
| १० | १२ | (वीरशवाः) | (वीरशैवाः) |
| १० | १५ | अनिश | त्वरित |
| १४ | ० | पंचस्या | पंचस्यां |

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

## दुर्वाददूरीकरणस्थ शुद्धाशुद्ध पत्रिका.

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८ | १८ | भावयत् | भावयेत् |
| १० | १४ | माच्योद्भवम् | माच्योद्भवम् |
| १६ | १८ | त्रिपुंड्रांकि | त्रिपुंड्रांकित |
| २० | ९ | यदक्तम् | यदुक्तम् |
| ३० | ५ | सिद्धातं | सिद्धांतं |

नियमितदिवसाभ्यंतरे प्रत्युत्तरमनायातं वीक्ष्य-तन्निकटे रजिष्टर द्वारा प्रेषितपत्रिकेयम् –

श्रीः

D-18-6-1917

भो महाशयाः

भवद्भिर्विलिख्य प्रेषितस्योत्तरस्योत्तरो मयाऽपि प्रेषितः। तस्य प्रत्युत्तरोऽद्यापि नदत्तः संमतिरपि मतस्यास्य विषये नप्रदर्शितश्च। आश्चर्यमेव भाति मे पंडितानां न कर्तव्यमिदमिति। अस्मिन् विषये कोऽपि संदेशः शीघ्रं प्रेषणीय इत्याशास्ते.

जंगमवाडी मठ काशी } वीरशैवः काशीनाथशर्मा काव्यतीर्थः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

अस्याऽपि पत्रस्य प्रत्युत्तरमानायातं दृष्ट्वा पुनस्तत्सकाशं रजिष्टरद्वारा प्रेषितपत्रमिदम्.

श्री १००८ जगद्गुरु पंचाचार्येभ्यो नमः

पंडित श्रीकालिकेश्वरदत्तशर्ममहोदयेषु विनय-पुरःसरं निवेदनमस्तिकिल !

श्रीमतां सन्निधौ D-18-6-1917 दिने पत्रिकैका प्रेषिता तत्प्रत्युत्तरं शीघ्रं दीयतामिति. किंत्वद्य-पर्यंतमपि भवतोत्तरं नदत्तम् । मौनं किमर्थं भवता धृतमित्येतन्नजानाम्यहम् । मतस्यास्य विषये भवतोऽसंमतिर्विद्यते चेत्त्वरितमुत्तरं प्रेष्यताम् । प्रत्युत्तर-मदत्वा भवान् मौनमेवांगीकरोति यदि मतस्यास्य विषये भवत्संमतिर्विद्यत इति वेद्मि. भवदुत्तरमार्ग-निरीक्षणमष्टदिनपर्यंतं क्रियते. जानातु भवान् इतिशुभम् ।

जंगमवाडी मठ
श्री क्षेत्रकाशी
D-4-8-1917

भवदीयः
वीरशैवः काशीनाथशर्मा
काव्यतीर्थः

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

श्री १०८ जगद्गुरु विश्वाराध्याय नमः

# श्रीमज्जगद्गुरुमल्लिकार्जुनशिवाचार्याष्टकम् ।

यो गौरीरमणाज्ञया शुभतरां लब्ध्वा जनिं भूतले ।
चार्वाकादिमतानि दोषकलितान्याखण्ड्य शैवं शिवम् ॥
सिद्धांतं स्वमतस्य दोषरहितं विस्तार्य मान्योऽभवत् ।
तं वन्दे गुरुमल्लिकार्जुनशिवाचार्यं सदा सद्गुरुम् ॥ १ ॥

यं देवाः सततं स्तुवन्ति मुनयो गन्धर्वसिद्धास्तथा ।
विष्णुब्रह्मसुरेन्द्रकिन्नरगणाः पौलस्त्यमुख्या अपि ॥
विश्वामित्रमुखो महर्षिनिकरो यं वा गुरुं मन्यते ।
विश्वाधारमनन्तमव्ययमजं वन्देऽनिशं तं गुरुम् ॥ २ ॥

येनाऽऽदौ गणनायकस्य महतो लोकांश्च संरक्षितुः ।
श्रीविश्वेश्वरगर्भलब्धजनुषो ज्ञानैकवारांनिधेः ॥
विश्वाराध्यजगद्गुरोः परतरं पीठञ्च पीठाश्रयम् ।
प्रेम्णाऽभूषि तदंघ्रिपंकजयुगे मच्चित्तभृङ्गो भ्रमेत् ॥ ३ ॥

यस्मै भूपतिमालया गुरुकरो भक्त्या समर्पीकृतः ।
क्षोणीमण्डलमण्डनैर्यतिवरैश्चार्पीकृतं मानसम् ॥
सर्वैः शैवगणैस्तथा सुरकुलैस्तन्वादयश्चार्पिता ।
स्तस्मिन् देहमनोधनानि सुगुरौ हन्ताऽर्पयिष्येऽनिशम् ॥ ४ ॥

यस्मान्मङ्गलकारिणो हि जगतां सृष्टिः स्थितिः संहृति ।
ज्ञात्वा चेत्ययजन् यजन्ति च यजिष्यन्तीह लोके नराः ॥
स्तस्मिन् श्रीमति मल्लिकार्जुनगुरोः पादद्वये मामकम् ।
हृत्पद्मं यजनाय निर्मलधिया संस्थापयिष्ये सदा ॥ ५ ॥

CC-0- Jangamwadi Math Collection. Digitized by eGangotri

यस्याख्यामृतपानमत्र कृतिनः कृत्वा परं कौशलम् ।
देवौघा अपि देवतां मुनिजना मौनं तथाऽऽपेदिरे ॥
तस्याख्यामृतनिर्झरो भवहरः श्रेयस्करः शंकरो ।
मन्दत्वैकमहावने मम मुखे सान्द्रं सदा स्यन्दताम् ॥ ६ ॥
यस्मिन् ब्रम्हपरायणो मुनिगणो गण्यः शरण्याग्रणीः ।
शैवं षट्स्थलदर्शनं पिपठिषुर्जज्ञे हि शैवं महः ॥
शैवा यं सततं सुसेव्य सुखदां विद्यां तथा लेभिरे ।
विद्यावारिनिधिः समेऽस्तु विबुधो विद्याप्रदाने गुरुः ॥ ७ ॥
यः कल्याणगुणालयश्चरवरा यं देशिकेन्द्रं विदुः ।
येनाऽकारि शिवंभुवश्चकवयो यस्मै नमः कुर्वते ॥
यस्माद्दीव्यति वीरशैवसमयो यस्याभिधानं सुधा ।
यस्मिन्नष्टविधश्च सिद्धिनिकरो मां पातु स श्रीगुरुः ॥ ८ ॥
इदं जगद्गुरोः स्तोत्रं ये पठन्ति नराः सदा ।
मुच्यन्ते ते हि पापेभ्यः प्राप्नुवन्ति च शंभुताम् ॥ ९ ॥
अष्टकं व्यतनोत्पुण्यं मल्लिकार्जुनसद्गुरोः ।
स्कंदगोत्रसमुद्भूतः काशीनाथसुधीर्मुदा ॥ १० ॥

पं. श्रीकाशीनाथशास्त्रिणा काव्यतीर्थेन विरचितं
स्वगुरुस्तोत्राष्टकं संपूर्णम् ।



SRI JAGADGURU VISHWAR...
JNANA SIMHASAN JNANAMA...
LIBRARY.
Jangamwadi Math, VARANASI
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

